देवता विधीयन्ते । कुतः संशयः । अग्निहोत्रशब्दस्य तद्विषयत्वात्[1] । द्रव्ये कर्मणि च । रुद्राद्या[2] द्रव्ये । अग्न्याद्याः कर्मणि । द्रव्ये प्रयुक्तत्वात्[3] अग्निहोत्रशब्दस्य कर्मणि या देवताः तासां ग्रहणम् । तत्रापि बह्व्यो[4] देवताः । अपरा अग्न्यादयो या[5] देवता[6] न तासां ग्रहणम् । कस्मात् । अनित्यत्वात् । कुतः । श्रुतेः । तस्या वा एतस्याग्निहोत्रस्य सप्त च[7] शतानि विंशतिश्च संवत्सरे । अग्नौ स्वाहाकारान्तता विहिता । बलिहरणेऽपि कथं स्यादिति यत्नः[8] ॥

अग्निहोत्रदेवताभ्य इति विधायको न मन्त्रः । तथार्थप्रतीतेः । अग्निहोत्रशब्दोऽयं द्रव्ये कर्मणि च वर्तते । तत्राग्निहोत्रदेवताभ्य इति किं द्रव्यदेवता गृह्यन्ते उत कर्मदेवता इति संशयः । काः पुनर्द्रव्यदेवताः । 'रुद्राद्या रौद्रं गविसत्' इत्याद्याः श्रुतावुक्तास्ता न सम्भवन्ति । भक्तिमात्रत्वात् । तेन कर्मदेवता गृह्यन्ते । एवं चेत् अग्निर्गृहपतिः इत्येवमाद्या अपि प्राप्नुवन्तीति शङ्का न कार्या । तासामनित्यत्वात् । कास्तर्हि । अग्निः सूर्यः प्रजापतिश्च उभयत्र । श्रुतौ चास्य सम्यगुपदेशः । 'तस्य वा एतस्याग्निहोत्रस्य' इत्यादि । सोमाय वनस्पतये इत्येको मन्त्रः वनस्पतेर्गुणत्वेन दृष्टत्वात् 'अग्निर्गृहपतिः. सोमो वनस्पतिः' इति । समाचारश्चैवमेव । इत्युक्तो देवयज्ञः ॥ (२)

स्वाहेत्यथ बलिहरणम् ॥

[1] L. तद्विषयत्वात.

[2] L. स्द्या.

[3] A., C., L. द्रव्ये योक्तत्वात्. प्रयुक्तत्वात् only a conjecture.

[4] L. omits बह्व्यो.

L. omits या.

[6] C. बह्व्यो देवताभ्य (this letter not distinct) दयोग्न्य या देवता.

[7] A. सप्त चो एव.

[8] L. has बलिहरणेऽपि कथं स्यादिति यज्ञ extra after there.

अथ बलिहरणम्[1] । अथशब्दः संबन्धकरणार्थः । सायं प्रातर्यथा[2] स्यात् ॥

अप्रेषितयागत्वादेव स्वाहाकारे सिद्धे स्वाहाकारवचनं ज्ञापनार्थम् । एतज्ज्ञाप्यते अन्यत्र बलिहरणे स्वाहाकारो न भवतीति । तेन चैत्यबलौ नमस्कारो भवति । अथशब्द आनन्तर्यार्थः । इतरथा कर्मान्तरत्वात् कालान्तरे वा बलिहरणं स्यात् । ब्रह्मयज्ञस्त्वेषां पूर्वो वा स्यात् उत्तरो वा । मनुष्ययज्ञस्तूत्तर एव । 'वैश्वदेवं कृत्वा अतिथिमाकाङ्क्षेत्' इति वचनात् ॥ (३)

**एताभ्यश्चैव देवताभ्योऽद्भ्य ओषधिवनस्पतिभ्यो गृहाय गृहदेवताभ्यो वास्तुदेवताभ्यः ॥**

एताभ्यश्चैव देवताभ्यः[3] । पूर्वोक्ता देवता[4] निर्दिश्यन्ते । चकारः समुच्चयार्थः । याश्चोत्तरा[5] वक्ष्यन्ते ॥

एताभ्यः प्रागुक्ताभ्यो देवताभ्यः । चकाराद्वक्ष्यमाणदेवताभ्यश्च । बलिहरणं कार्यम् । एवकारः पौनर्वाचिकः । भूमौ प्राक्संस्थां पङ्क्तिं करोति । ब्रह्मणे स्वाहेति हुत्वान्तरालमुक्त्वाद्भ्य इत्यादिभिर्जुहोति । गृहदेवताभ्य इति मन्त्रः न विधायकः । तथा वास्तुदेवताभ्य इति च । यदि हि विधायकः स्यात् उभयवचनमपार्थकं स्यात् । गृहमेव हि वास्त्वित्युच्यते ॥ (४)

**इन्द्रायेन्द्रपुरुषेभ्यो यमाय यमपुरुषेभ्यो वरुणाय वरुणपुरुषेभ्यः सोमाय सोमपुरुषेभ्य इति प्रतिदिशम् ॥**

[1] L. अथ बलिहरणमिति.

[2] A. मातर्यथा.

[3] C. एताभ्यश्चैव यथा स्यादेवताभ्यः L. has इति after it.

[4] A. omits this word.

[5] L., C. यश्चोत्तरा.

अद्भ्य इत्येवमारभ्य इति प्रतिदिशम् । दिग्देवतानां दिशं दिशं प्रतिवलिहरणं कर्तव्यम् । यत्र प्रधानदेवताः तत्र तत्र पुरुषाः दिग्देवतानाम् ॥

दिग्ग्रहणेन चतस्रो दिशो गृह्यन्ते । यत्रैव प्रधानदेवतास्तत्रैव पुरुषैर्भवितव्यमिति कृत्वा प्रधानानामुत्तरतः पुरुषेभ्यो बलिं हरेत् ॥ (५)

**ब्रह्मणे ब्रह्मपुरुषेभ्य इति मध्ये ॥**

**विश्वेभ्यो देवेभ्यः ॥**

ब्रह्मणे ब्रह्मपुरुषेभ्यः इति च विश्वेभ्यो देवेभ्य इति च[1] मध्य एव । विश्वेषां तु[2] पुनर्वचनात् कुर्वन्त्येके[3] । भवतीति विशिष्टदेशोपदेशात् ॥

दिग्देवतानां मध्ये पूर्वोक्ते अन्तराले ॥ (६)

मध्य एव ॥ (७)

**सर्वेभ्यो भूतेभ्यो दिवाचारिभ्य इति दिवा ॥**

**नक्तञ्चारिभ्य इति नक्तम् ॥**

सर्वेभ्यो भूतेभ्यो दिवाचारिभ्य इति दिवा मध्य एव । उभयकालत्वात् । दिवाग्रहणम् सायंनिवृत्त्यर्थम् । उत्तरत्र विशेषोपदेशात् नोभयत्र भविष्यति इति[4] । एवं तर्हि प्रयोगोपदेशार्थम् । दिवा कथं प्रथमप्रयोगः

[1] C. has only विश्वेभ्य इति च.

[2] C. विश्वे तु.

[3] C. has प्राक् कुर्वन्त्येके.

[4] L. omits इति.

स्यात् । सायंप्रातरुपदेशात् सायमारम्भणं स्यात् अग्निहोत्रवत् । प्रातरारम्भणं चेष्यते । तस्माद्दिवाग्रहणम् ॥

मध्य एव । दिवाग्रहणं ज्ञापनार्थं क्रियते । तेन वैश्वदेवस्य प्रातरारम्भणं भवति । इतरथा सायंप्रातरुपदेशात् सायमुपक्रमः स्यात् अग्निहोत्रवत् । तच्चानिष्टम् । अतो दिवाग्रहणम् । तेनाग्नये स्वाहेति सायं जुहुयादित्यत्र सायमुपक्रमः ॥ (८)

दिवाचारिभ्य इत्यस्य स्थाने नक्तञ्चारिभ्य इति नक्तं भवति ॥ (९)

**रक्षोभ्य इत्युत्तरतः ॥**

रक्षोभ्य इत्युत्तरतः । दिग्देवतानामुत्तरतः बलिहरणं कर्तव्यम् । विवक्षितमेतत् ॥

सर्वासामुत्तरतः ॥ (१०)

**स्वधा पितृभ्य इति प्राचीनावीती शेषं दक्षिणा निनयेत् ॥**

स्वधा पितृभ्य इति । बलिहरणशेषं प्राचीनावीती भूत्वा दक्षिणस्यां दिशि निषिञ्चेत् । प्राचीनावीतीग्रहणं यज्ञोपवीतित्वनिवृत्त्यर्थम्[1] । न ह्यप्राप्तं पितृकर्मणि[2] प्राचीनावीतित्वं भवति । तेन किं सिद्धम्[3] । दक्षिणस्यां[4] दिशि मासाः पितरः । प्रतिस्वं चमसेभ्य इत्यत्र यज्ञोपवीतित्वं[5] सिद्धं भवति । निनयनोपदेशाच्च द्रव्यस्य[6] भवति । अर्थप्राप्तं निनयनं

[1] C. यज्ञोपवीते निवृत्त्यर्थम्.

[2] C. नह्यप्राप्तं पितृकर्म पिवृकर्मणि.

[3] C. सिद्ध.

[4] C. दक्षिणस्या.

[5] C. यज्ञोपवीती.

[6] L. द्रवद्रव्यस्य A. C. द्रवस्य.

किमर्थं चोद्यते । क्रियान्तरोपदेशार्थं बलिहरणं माभूदिति । सति बलिहरणे स्वाहाकारान्तता प्रसज्येत । का[1] पुनरत्र क्रिया विवक्षिता । पितृयज्ञक्रिया । शेषग्रहणं संबन्धक्रियार्थम् । यावद्बलिहरणं तावदिदमपि यथा स्यात् । ऊर्ध्वं स्नानात् प्रागुपनयनाच्चेदं कर्मेच्छन्ति पृथक् पाकश्चेत् । एकपाकानां च सकृद्भवति । अन्नसंस्कारत्वात् । अथ केन होमो भवति[2] । चतुर्गृहीताभावात् न स्रुचा जुहोति । आज्याभावात् न स्रुवेण । वचनाभावान्न दर्व्या । पारिशेष्यात्[3] पाणिना ॥

'यज्ञोपवीतशौचे च' इति यत्र प्राचीनावीतित्वं निवीतित्वं वाचार्येण न विहितं तत्र यज्ञोपवीतित्वं प्राप्तम । अतः प्राचीनावीतित्वं विधीयते । निनयेदिति वचनं क्रियान्तरज्ञापनार्थम् । तेन बलिहरणमिदं न भवति । किमेवं सिध्यति । स्वाहाकारो न भवति । ननु स्वधाकारः प्रदानार्थः स्वाहाकारश्च प्रदानार्थ इत्युभयोरेककार्यकारित्वेन समानजातीयत्वात् स्वधाकारस्तस्य बाधको भवति । नैतदेवम । समानार्थयोः समुच्चयो दृश्यते । यथा सोमाय पितृमते स्वधा नम इति स्वधानमस्कारयोः तद्वदत्राप्याशङ्का स्यात् । का पुनरियं क्रिया । पितृयज्ञः । एवं च कृत्वा पितृयज्ञार्थं ब्राह्मणभोजनमन्वहं न कर्त्तव्यमिति सिद्धम् । शेषग्रहणमानन्तर्यार्थम् । असत्यस्मिन् क्रियान्तरत्वात्कालान्तरे वा स्यात् । एवमुक्तं वैश्वदेवम् । यस्मिन् कस्मिंश्चिदग्नौ वैश्वदेवं कार्यं न गृह्य एवेति नियमः । कुतः । प्राङ्निधानात् विवाहाग्नेः । यदि हि तत्राभिप्रेतमभविष्यत् तमेव पूर्वं ब्रूयात् । पाणिना च वैश्वदेवं कार्यं न पात्रान्तरेण शक्यत्वात् ॥ (११)

इति प्रथमे द्वितीया कण्डिका

---

[1] L. किं.
[2] C. होमो न भवति.
[3] L. परिशेषात्.

अथ खलु यत्र क्च होष्यन्त्स्यादिषुमात्रावरं सर्वतः स्थण्डिलमुपलिप्योल्लिख्य षळ्लेखा उदगायतां पश्चात्प्रागायते नानान्तयोस्तिस्रो मध्ये तदभ्युक्ष्याग्निं प्रतिष्ठाप्यान्वाधाय परिसमूह्य परिस्तीर्य पुरस्ताद्दक्षिणतः पश्चादुत्तरत इत्युदक्संस्थं तूष्णीं पर्युक्षणम् ॥

अथ खलु[1] इत्युदक्संस्थं एतदन्तं केचित् । पृथगुपदेशात् तूष्णीं पर्युक्षणम् । कर्तव्यमिति वाक्यशेषः । अथशब्दोऽधिकारार्थः । कथम् । इहातः प्रभृति यानि कर्माणि विधीयन्ते तेषामेते धर्मा यथा स्युः । प्रागाम्नातस्य निवृत्त्यर्थम्[2] । खलु । अयं निपातो[3]ऽनर्थकः । मिताक्षरेष्वनर्थकाः । यत्र क्व चेति किमर्थम्[4] । अनूच्यमाने एतस्मिन् होमविधिः प्रसज्येत । योऽयमहरहश्चोच्यते होमः तत् यदग्नौ जुहोति इत्यत्रापि स्यात् । सर्वहोमानां चायं धर्म इष्यते साधारणः । तस्मात् यत्र क्च ग्रहणम् । एवमपि क्चेति[5] किमर्थम् । प्रसिद्धतन्त्राणामपि होमसामान्यात् कथमेते धर्माः[6] स्युः । एवं यथासंभवं क्वचप्रयोजनम् । तस्याग्निहोत्रेणेत्यत्र[7] प्रतिषेधः । कथं पुनरत्र प्रतिषेधः । अग्निहोत्रव्यपदेशात् । तदुपरिष्टात् विभावयिष्यामः । केषां चात्र संभवः । अन्वाधानपरिसमूहनपरिस्तरणपर्युक्षणानाम् । तस्मात् क्वचग्रहणम् । इषुमात्रावरम्[8] । इषोर्मात्रा इषुमात्रा अवरा यस्य तत् इषुमात्रावरम् । इषुप्रमाणमित्यर्थः । किं तत् ।

[1] L. अथ खल्विति. C. अथ खलु यत्र क्व च होष्यत्स्यात्.

[2] L. निवृत्यर्थः

[3] C. खल्वन्निपातो.

[4] A. यत्र क्व च किमर्थम्.

[5] C. एवमपिति.

[6] C. धर्मार्मा.

[7] A. तस्याग्निहोत्रेण यत्र.

[8] L. इषुमात्रावरमिति.

स्थण्डिलम् । एतैः संस्कारैः भूमिप्रदेशं संस्करोति । सर्वतः[1] इति । किमिति । समीक्ष्य अग्नेः प्रतिष्ठापनदेशमभिसमीक्ष्य ततः सर्वासु दिक्षु । कथं पुनरेतत् ज्ञायते । उत्तरत्र पुनर्विशेषणात् । उल्लिख्य षट् लेखाः[2] । ऊर्ध्वं षण्णां लेखानां उल्लेखनं करोति । तस्मिन्नेव देशे न सर्वस्मिन् स्थण्डिले[3] पुनरुल्लेखनं कर्तव्यम् । उदगायतां पश्चात्[4] । कस्य पश्चात् । स्थण्डिलस्येत्यधिकृतत्वात् । नेत्युच्यते । अग्नेः प्रतिष्ठापनदेशस्य पश्चात् । कस्मात् । तस्य विशेषाधिकारात् । अत एव च तस्य सर्वत इषुमात्रावरं भवति । प्रागायते नानान्तयोः[5] । तस्या लेखाया अन्तयोः असंसृष्टे प्रागायते लेखे उल्लिखति । तिस्रो मध्ये[6] प्रागायते । तयोर्मध्ये तिस्रो लेखा उल्लिखति । अथैवं षट्के[7] सिद्धे षड्ग्रहणं किमर्थम् । संबन्धार्थम् । कथम् । अग्निना सर्वा लेखा अभिसंबध्यन्ते[8] । अस्माच्च ज्ञायते अयं विशिष्टो देशो विवक्षित इति । यतो दिग्विभागः । तदभ्युक्ष्य अद्भिः । उपरि प्रोक्षणमभ्युक्षणम् । अग्निं प्रतिष्ठाप्य[9] । होमसमर्थमग्निं निदधाति । तस्मिन् अन्वाधाय द्वे समिधावादधाति । ततः परिसमूहनम् । ततः परिस्तरणं कुशैः । पुरस्तात् प्रवृत्य उदक्संस्थम्[10] । उदक्संस्थत्वे सिद्धे किमर्थं पुनरुदक्संस्थवचनम् । प्रतिदिशमुदक्संस्थं यथा स्यादिति उदक्संस्थवचनम् ।

[1] L. सर्व इति.
[2] L. उल्लिख्य षट् लेखा इति.
[3] A. only स्थण्डि.
[4] L. उदगायता इति.
[5] L. प्रागागते नानान्तयो इति. C. प्रागायते नान्यन्तयोः
[6] L. तिस्रो मध्य इति.
[7] L. षक्के.
[8] A., C., L. अभिसंबध्यते.
[9] L. अग्नि प्रतिष्ठाप्य इति.
[10] C. प्रवृत्युदक् संस्थम्.

एकसूत्रभावं कुर्वतामेतत् प्रयोजनम् । ये पुनः पृथक्कुर्वन्ति ते कर्मशब्दाध्याहारं कुर्वन्ति उदक्संस्थं कर्म भवेदिति । परिस्तरणं चान्यानि च यथोल्लेखनं[1] तथा शिरउन्दनं[2] परिसमूहनपर्युक्षणे च[3] । सर्वत्रैवंप्रकाराणि उदाहरणानि । पर्युक्षणं तूष्णीं कर्तव्यम् । मन्त्राभावात् । मन्त्रप्रतिषेधोऽनर्थकः । पर्युक्षणाचोदनासामर्थ्यात् मन्त्रप्राप्तिः[4] । अग्निहोत्रदृष्टस्य ततः प्रकृतत्वान्न भविष्यति । तस्मात् यावदुक्तयैव क्रियया एव[5] सिद्धे यदप्राप्तं मन्त्रं प्रतिषेधति तत् ज्ञापयति अन्येषाममन्त्रप्राप्तानां कर्मणां[6] कथं प्रवृत्तिः स्यात् । यथा त्रिस्त्रिः पुनः पुनरुदकं[7] आदायाद्यन्तयोः[8] परिसमूहनपूर्वकं च ॥

अथशब्दोऽधिकारार्थः । इत उत्तरं यानि वक्ष्यन्ते तेषामेवायं होमविधिर्भवतीति । तेन वैश्वदेवः क्वचग्रहणेन प्राप्यमाणो होष्यधर्मो न भवति । खलुशब्दोऽपार्थकः । मिताक्षरेष्वनर्थक इति वचनात् । यत्रक्वचग्रहणमहरहः क्रियान्तरविद्याशङ्कानिवृत्त्यर्थम् । यत्र क्व च होष्यन् स्यादिति होममनूद्य धर्मविधिः । तर्हि यत्रेत्येवास्तु । क्वचग्रहणमनर्थकम् । न । तन्त्रप्रतिषेधविषयेऽप्यौपासनाग्निपरिचरणे एतत्सूत्रविहितपरिसमूहनपरिस्तरणपर्युक्षणानां प्राप्त्यर्थं क्वचग्रहणम् । लेखादयो न सन्तीति वक्ष्यामः । इषुमात्रा मात्रा यस्य स्थण्डिलस्य तदिषुमात्रम् । एकस्य मात्राशब्दस्य लोपः । उष्ट्रमुखवत् । तच्च तदवरञ्च इषुमात्रावरम् । अवरं निकृष्टमित्यर्थः । सर्वतः सर्वासु दिक्षु । चतसृष्वित्यर्थः । चतसृष्वपि दिक्षु

[1] L. यल्लेखनं.

[2] C. शिरसि औदनं.

[3] L. परिसमूहनं पर्युक्षणेन.

[4] A. पर्युक्षणचासादमनार्थ्यन्मन्त्रप्राप्तिः

[5] L. तस्मात् यदुक्तक्रिया. C. तस्मावदुक्तक्रियैव.

[6] A. धर्मणां.

[7] C. त्रिस्त्रिः पुनरुदकं.

[8] C. आदायाद्यंतयोः

इषुमात्रप्रमाणं ततोऽधिकं वा चतुरश्रं स्थण्डिलं गोमयेनोपलिप्य षट् लेखा उल्लिखेत् । षड्ग्रहणं कथम् । षट्स्वपि लेखासु अग्नेः स्थापनं यथा स्यादिति । केनचिद्यज्ञियेन शकलेन स्थण्डिलमध्ये उदग्दीर्घां प्रादेशमात्रां न्यूनां वा लेखामग्निप्रतिष्ठापनदेशस्य पश्चाल्लिखेत् । नानेत्यसंसर्गार्थम् । तस्या अन्तयोर्नाना असंसृष्टे प्रागायते लेखे लिखेत् । ततस्तिस्रो मध्ये असंसृष्टाः प्रागायताः लेखा लिखेत् । शकलं तत्रैव निधाय । स्थण्डिलमभ्युक्ष्य शकलं निरस्याप उपस्पृश्याभ्यात्ममग्निं प्रतिष्ठाप्यान्वादधति । ततोऽतिदेशप्राप्तं बर्हिष इध्मस्य च सन्नहनं करोति । अन्वाधानं नाम कर्माङ्गत्वेन द्वयोस्तिसृणां समिधां अभ्याधानम् । ततः परिसमूह्य । परिसमूहनं नामाग्नेः समन्तात् परिमार्जनम् । तच्चाग्निहोत्रवत् । ततः परिस्तीर्य । पुरस्ताद्दक्षिणतः पश्चादुत्तरत इत्येवम् । उदक्संस्थवचनं एकैकस्यां दिश्युदक्संस्थताप्राप्त्यर्थम् । अथवा इत्युदक्संस्थमिति पृथग्योगः । निपातानामनेकार्थत्वादितिशब्द एवम्प्रकारे । एवंविधं यत्कर्म सर्वदिक्सम्बद्धं परिसमूहनपर्युक्षणशिरस्त्रिरुन्दनादिकं तदपराजितायां दिश्यारभ्योदक्संस्थं कार्यमित्यर्थः । ततस्तूष्णीं पर्युक्षणं करोति । तूष्णींग्रहणं मन्त्रवर्जमन्ये धर्मा अग्निहोत्रदृष्टा भवन्तीत्येवमर्थम् । त्रिस्त्रिरेकैकं पुनः पुनरुदकमादायादायान्ते च कर्मणां पर्युक्षणम् । उभयत्र च परिसमूहनपूर्वकत्वमित्यत्र पुनः परिसमूहनविधानं मध्ये परिस्तरणसिद्ध्यर्थम् । एतस्मिन् काले उत्तरतोऽग्नेरपः प्रणयति चमसेन कांस्येन मृन्मयेन वा । उत्तरत्र निनयनदर्शनात् ॥ (१)

## पवित्राभ्यामाज्यस्योत्पवनम् ॥

पवित्राभ्यामाज्यस्योत्पवनं[1] कर्तव्यम् । आज्यार्थम्[2] । सर्पिराज्यमुच्यते । उत्पवनोपायमुत्तरत्र विदधाति ॥

कार्यमिति शेषः । अथ किंलक्षणे पवित्रे कथं वा उत्पवनं कार्यमित्येतद्द्वयं निर्णेतुमाह ॥ (२)

[1] L. has पवित्राभ्यामिति before this. C. पवित्राभ्यामाज्यस्योत्पवनम्.
[2] A. आज्यार्थं.

**अप्रच्छिन्नाग्रावनन्तर्गर्भौ प्रादेशमात्रौ कुशौ नानान्तयोर्गृहीत्वाङ्गुष्ठोपकनिष्ठिकाभ्यामुत्तानाभ्यां पाणिभ्यां सवितुष्ट्वा प्रसव उत्पुनाम्यच्छिद्रेण पवित्रेण वसोः सूर्यस्य रश्मिभिः इति प्रागुत्पुनाति सकृन्मन्त्रेण द्विस्तूष्णीम् ॥**

अप्रच्छिन्नाग्रौ द्वौ । प्रकर्षेण च्छिन्ने अग्रे[1] ययोस्तावेतौ प्रच्छिन्नाग्रौ[2] । अप्रच्छिन्नाग्रौ[3] । ईषच्छिन्नाग्रावपि भवतः । अनन्तर्गर्भौ । मध्ये गर्भं[4] ययोर्नास्ति तावेवानन्तर्गर्भौ । कौ तौ । कुशौ । प्रादेशमात्रौ इति परिमाणनिर्देशः । एवंलक्षणे पवित्रे भवतः । नान्योन्यसंसृष्टार्थं नानान्तयोरिति ग्रहणम् । देशनियमार्थं[5] अङ्गुष्ठोपकनिष्ठिकाभ्याम् । अङ्गुष्ठश्च उपकनिष्ठिका[6] च अंगुष्ठोपकनिष्ठिके । कनिष्ठिकाया उप वर्तत इत्युपकनिष्ठिका । ताभ्यामङ्गुष्ठोपकनिष्ठिकाभ्यां उभयोः पाण्योः । उत्तानाभ्यां इति पाण्योश्चेष्टाविशेषः । सवितुष्ट्वा[7] इत्यनेन मन्त्रेण सकृत् द्विस्तूष्णीम् । प्रागिति निर्देशः । उत्पुनातीति क्रिया ।

सकृन्मन्त्रेणेत्येतत् न वक्तव्यम् । सर्वत्रैवं कर्मावृत्तौ इति[8] सिद्धत्वात् । नेत्युच्यते । एकमन्त्रायां कर्मावृत्तावेव[9] परिभाषा । इह तु

[1] ग्रे looks more like ग्जे in A.

[2] C. ययोस्तावेतावप्रच्छिन्नाग्रौ. Then there are two small vertical strokes above व between ता and प्र; perhaps व is to be deleted.

[3] L. omits this word.

[4] L. गर्भे.

[5] L. C. देशनिर्देशार्थं.

[6] A. उपकनिष्ठा.

[7] L. has सवितुष्ट्वेति before this.

[8] A. कर्मादत्ताविति.

[9] C. कर्मावृत्तावे. The final व missing.

मन्त्रबहुत्वात् प्रत्युत्पवनं[1] मन्त्राः प्राप्ताः । सवितुष्ट्वा प्रसव उत्पुनामि इति[2] प्रथमम्[3] । अच्छिद्रेण पवित्रेण इति[4] द्वितीयम् । वसोः सूर्यस्य रश्मिभिः इति तृतीयम्[5] । एवं प्राप्ते सर्वैरेतैर्मन्त्रैः कथं प्रथमं उत्पवनं स्यात्[6] । ततो द्विः[7] तूष्णीं इत्येतावदर्थोऽयमारम्भः[8] । एवमेके । नेत्यपरे । कस्मात् । मन्त्रैक्यत्वात्[9] । यदि मन्त्रैक्यत्वं[10] ननु पूर्वया परिभाषया प्राप्तं सर्वत्रैव भवति[11] । आवृत्तिनोदनाभावात्[12] न प्राप्नोति । यद्येवमावृत्तिरेव नोदयितव्या । प्रागुत्पुनाति त्रिरित्येवं लघुना[13] सिद्धे किमर्थं गुर्वारम्भः क्रियते । गुर्वारम्भं कुर्वन् तत् ज्ञापयति । कथमेतस्मिन् गृह्यकर्मणि सर्वत्रैव ह्येषा[14] परिभाषा न स्यात् । यावत् कर्मावर्तते तावन्मन्त्रस्यावृत्तिः यथा स्यात् । यथा प्रदक्षिणं[15] शिरस्त्रिरुन्दति । अग्निमुपस्पृश्य[16]

[1] A. प्रत्युवनं.

[2] A. उत्पुनातीति.

[3] C. omits प्रथमम्.

[4] L. अच्छिद्रेणेति.

[5] C. तृतीय.

[6] L. उत्पवं स्यात्.

[7] A. L. द्विश्च.

[8] L. इत्येतावदर्थो यागारम्भः

[9] C. मन्त्रैकत्वात्.

[10] L. C. मन्त्रैकत्वं.

[11] L. सर्वं नैव भवति.

[12] L. आवृत्तिश्चोदनाभावात्.

[13] L. लघुता.

[14] A. सर्वत्रैवनेषा. C. सर्वत्रैव देषा.

[15] A. प्रदक्षिणी.

[16] A. अग्निमुपस्पृश्य.

मुखं निर्माष्टि[1]। त्रिरभ्यासस्येत्येतत्[2] प्रयोजनम्। येषां तु पूर्वार्थः तेषामेवमादिषु सर्वत्रैवमित्येषा परिभाषा भवति। नन्वयमर्थो यश्चासौ प्रागुक्तो दोषः सकृन्मन्त्रेणेत्येवमाद्यतिरिच्यते। स च न[3] परिहृतः। अथ प्राग्ग्रहणं किमर्थम्। तस्य नित्या इति सिद्धत्वात् प्रत्यङ्निवृत्त्यर्थम्। शास्त्रान्तरदृष्टत्वात्। एवं ब्रुवता किं दर्शितं भवति। अविप्रतिषिद्धाः शास्त्रान्तरदृष्टा विधयो भवन्तीति। किमर्थं पुनर्योगद्वयेन उत्पवनविधिः[4]। उच्यते। पुरस्तादाज्यग्रहणं अवश्यं कर्तव्यम्[5]। द्रव्यनिर्देशार्थं तदिहैव क्रियताम्। प्रागाज्यमिति[6]। तथा पवित्रग्रहणं ईदृग्लक्षणयोः कुशयोः पवित्रसंज्ञाकरणार्थम्। तत्र तत्र पवित्रग्रहणे कथमीदृग्लक्षणयोः कुशयोर्ग्रहणं स्यात्[7]। चतुरश्चतुरो[8] मुष्टीन् निर्वपति पवित्रे[9] अन्तर्धाय। दक्षिणोत्तरौ पाणी संधाय पवित्रवन्तौ इत्येवमादि। एतदपीहैव[10] कर्तव्यम्। प्रादेशमात्रौ कुशौ पवित्रे इति। उभये एतस्मिन् आरब्धे किमधिकं शिष्टमुत्पुनातीत्येतदतिरिच्यते। उत्पुनातीति[11] क्रियायाः चोदितत्वात्। एवं सिद्धे यत्[12] क्रियां चोदयति तत्प्रदर्शयति द्विविधमुत्पवनं भवति। तूष्णीं च

[1] A. L. निमार्ष्टि. C. निर्मोष्टि.

[2] A. त्रिरभ्यासस्यत्येतत्. L. त्रिरभ्यासतत. C. त्रिरभ्यसतत्.

[3] L. omits न.

[4] C. योगद्वयोनोत्पवनविधिः

[5] A. न कर्तव्यम् instead of अवश्यं कर्तव्यम्.

[6] A. प्रागाज्यमिसि.

[7] A. C. have यथा before स्यात्.

[8] C. चतुश्चतुरो.

[9] A. only वित्रे. Initial प omitted.

[10] C. एतदपीहै. The final व omitted.

[11] A. उत्पुनाति.

[12] A. omits यत्.

मन्त्रवच्च उद्धरणवत् । तत्र अनयोरुत्पवनयोः[1] सर्वत्र विकल्पः । नेत्युच्यते । इह प्रकरणे समन्त्रकम् । प्रकरणान्तरे तूष्णीम् । वैतानिकेषु कर्मसु । यथा प्रोष्य[2] भूयो दशरात्रात् चतुर्गृहीतमाज्यं जुहुयात् । अनुदिने चतुर्गृहीतमाज्यं[3] इत्येवमादिष्वाज्यग्रहणेषु । न ह्यसंस्कृते आज्ये आज्यशब्दो भवति । नवनीतं नोत्पूतं इत्युत्पवनचोदनात् । अत्रैवमेतत् कल्पयन्ति । यच्च[4] प्रागुक्तं संवन्धकरणप्रयोजनविहितं[5] आगमपि[6] भवतीति इदं[7] ततः सिद्धम् ॥

प्रशब्दः सूक्ष्मच्छिन्नाग्रयोरनिवृत्यर्थः । न विद्यते अन्तर्मध्ये गर्भो ययोस्तौ तथोक्तौ । प्रादेशमात्रौ कुशौ । एवंलक्षणयुक्तौ कुशौ पवित्रसंज्ञौ । नानेत्यसंसर्गार्थम् । पवित्रे अन्तयोरसंस्पृष्टे अङ्गुष्ठोपकनिष्ठिकाभ्यामुत्तानाभ्यां पाणिभ्यां गृहीत्वा प्रागुत्पुनाति सकृन्मन्त्रेण द्विस्तूष्णीम् । प्रागिति पाठः कार्यः । प्राङिति पुल्लिंगपाठे तु कर्तुः प्राङ्मुखत्वं स्यात् । तच्च परिभाषासिद्धम् । ननु कर्मणश्चापि प्राक्त्वं तत एव सिद्धम् । सत्यम् । तत्तु शास्त्रान्तरदृष्टं पुनराहारनिवृत्यर्थम् । तेन ज्ञायते शास्त्रान्तरदृष्टानामविरोधिनां पात्रासादनादीनामिच्छातः क्रियेति । इत्थं हि शास्त्रान्तरे दृष्टम् । परिस्तरणकाले उत्तरतोऽग्नेः कांश्चिद्दर्भानास्तीर्य ब्रह्मवत्सु कर्मसु दक्षिणतोऽग्नेरपि कांश्चिद्दर्भानास्तीर्य ततोऽग्निं पर्युक्ष्य उदगग्रेदर्भेषु द्वन्द्वं न्यञ्चि पात्राणि प्रयुनक्ति उभाभ्यां पाणिभ्याम् । अयं पात्रासादनक्रमः ।

[1] C. अनयोरुत्पवनयो. No visarga.

[2] L. C. प्रेष्य.

[3] C. चतुर्गृहीतमाज्यम्. There is जु.

[4] L. यत्र.

[5] A. संवन्धकारणप्रयोजनविहितम्.

[6] Not clear.

[7] A. इद.

तीत्येवमर्थम् । पूर्वयोगः किमर्थः । अस्याधिकारार्थ इति चेत् तर्हि प्रागुत्पुनात्याज्यं इत्यत्रैव वाच्यम् । अथ पवित्रसंज्ञार्थः तर्हि कुशौ पवित्रे इत्यत्रैव वाच्यम् । उच्यते । पूर्वेणामन्त्रकमुत्पवनं विधीयते । अनेन तु समन्त्रकम् । तत्र वैतानिके अमन्त्रकं गृह्ये कर्मणि समन्त्रकं इत्येवं विनिवेशः ॥ (३)

## कृताकृतमाज्यहोमेषु परिस्तरणम् ॥

आज्येन होमाः[1] । तेष्वाज्यहोमेषु परिस्तरणं कृताकृतं भवति । तत्र कृताकृतशब्दं[2] ईषत्करणे उपदिशन्ति । लक्षणया इह तु क्रियायां वा अक्रियायां वा[3] विकल्पेन[4] वर्तते । कथं ज्ञायते । अन्यत्रापि[5] दृष्टत्वात् । कृताकृतावाज्यभागाविति[6] । तेनाज्यहोमेषु परिस्तरणं विकल्पितं[7] इत्यर्थः । चौलकर्मप्रभृतिषु आज्यग्रहणं[8] कुर्वते । तत् ज्ञापयति पाकयज्ञव्यतिरिक्तान्यन्यान्यपि कर्माणि भवन्तीति यत् उक्तं तत् सिद्धम् । कर्मभेदाच्च । कर्मभेदेन ये होष्यद्धर्मा[9] विहितास्ते तत्र भवन्ति । पूर्णपात्रेध्माघाराज्यभागस्विष्टकृतानि[10] भवन्ति । पाकेन विधानम्[11] । तेन यज्ञा

[1] Before आज्ये होमाः A. has कृता॰णम्. L. has कृताकृतमिति. C. quotes the entire sūtra.

[2] A. कृताकृशब्दं.

[3] L. अक्रियायां extra after अक्रियायां वा.

[4] L. विकल्पे.

[5] L. अन्यत्रादि.

[6] L. कृताकृताज्यभागाविति. C. omits the entire portion till this from आज्येन होमाः

[7] A. विकल्पितेः

[8] A. चौलकर्मप्रभृतिष्वोज्य.

[9] L. C. होष्यत्यधर्मा.

[10] C. पूर्णपात्रेध्माधारावाज्यभागस्विष्टकृतानि.

[11] A. विधान.

इत्येवं विग्रहं[1] कुर्वता । नेत्यपरे[2] । नात्र पाकशब्दः पक्तौ वर्वते इत्युक्तं[3] प्राक् । तेनाज्यहोमानामपि[4] पाकयज्ञसंज्ञाभावात् सर्वं तन्त्रं भवति[5] । पूर्णपात्रादिआज्यग्रहणं पाकयज्ञैकदेशग्रहणार्थम् । पाकयज्ञानां सतां केचिदाज्यहोमा उच्यन्ते । तेष्वयं[6] धर्मविशेषो यथा स्यात् । यथा वैतानिकसंज्ञासामान्यात् सर्वकर्मसु प्रवर्तते[7] । प्रतिविशिष्टाश्च इति पशुसोमा[8] इति । एवमिहापि पाकयज्ञसंज्ञास्त्विति[9] सिद्धम्[10] । आज्यहोमाः किंलक्षणा भवन्ति । येषु आज्यमेव[11] द्रव्यं[12] नान्यत् ते आज्यहोमाः । एवं तर्ह्यतिप्रसङ्गः[13] । आ नः प्रजां जनयतु प्रजापतिः इति चतसृभिः प्रत्यृचं हुत्वा राकामहमित्येवमादिषु सर्वाज्यहोमत्वे कस्मान्न[14] भवति । क्वचिदाज्यग्रहणात् । तेन चौलादिपु आज्याहुतीरित्येवमादिष्वयं धर्मो भवति नान्यत्रेत्युत्तरत्र पुनः विभावयिष्यामः ॥

[1] A. विग्रह.

[2] A. नित्यपरे. C. नेत्यप.

[3] A. इत्युक्त.

[4] A. has तेनाज्यहोमानामपि इत्युक्तं प्राक् extra after इत्युक्तंप्राक् and तेनाज्यहोमानामपि.

[5] A. सार्वं तन्त्र भरति. L. सर्वयज्ञः तन्त्रं भवति.

[6] A. Looks more like तेष्वयं.

[7] L. C. only वर्तते.

[8] L. पशुसामा.

[9] A. पाकयज्ञास्त्वेति. L. पाकयज्ञसंज्ञास्त्वेति. C. पाकयज्ञसंज्ञामध्येवेति.

[10] A. सिद्ध.

[11] L. C. आज्यमेव येषु instead of येषु आज्यमेव A. ये is very indistinct. There is something below ये.

[12] A. द्रव्य.

[13] A. C. तर्ह्यविप्रसङ्गः

[14] A. कस्यान्न.

कृतिरेव कृतम्। कृतञ्च अकृतञ्च यस्य तत् तथोक्तम्। आज्यमेव यत्र हविः स आज्यहोमः। अन्यथाज्यग्रहणस्य वैयर्थ्यं स्यात्। सर्वत्र ह्याघारादयः सन्त्येव। आज्यहोमेषु परिस्तरणं कार्यं वा न वेत्यर्थः। अयं च परिस्तरणविकल्पो यत्राज्यग्रहणमस्ति यथा 'आज्याहुतीर्जुहुयात्' इति तत्रैव भवति न पुनरनादिष्टाज्यहोमेषु। यद्यनादिष्टहोमेष्वप्ययं विकल्पः स्यात् तत्राज्यग्रहणमपार्थकं स्यात् ॥ (४)

तथाज्यभागौ पाकयज्ञेषु ॥

येन[1] प्रकारेण परिस्तरणं विहितं तेन[2] प्रकारेण पाकयज्ञेषु आज्यभागौ भवतः। कर्तव्यौ वा न वेत्यर्थः[3]। पाकयज्ञग्रहणं नानार्थप्रज्ञानार्थम्[4]। अन्ये[5] आज्यहोमा अन्ये पाकयज्ञा इति[6]। अन्येषां पाकयज्ञग्रहणं[7] सर्वपाकयज्ञपरिहारार्थं मा भूदिति। अयमपि विधिराज्यहोमेष्विति ॥

तथेति कृताकृताविल्यर्थम्। पाकयज्ञेषु सर्वेष्वाज्यभागौ कार्यौ वा नवेत्यर्थः। पाकयज्ञग्रहणमाज्यहोमाविकारनिवृत्त्यर्थम् ॥ (५)

ब्रह्मा च धन्वन्तरियज्ञशूलगववर्जम् ॥

[1] Before this A. C. have the whole sūtra. L. does not give even the pratika.

[2] A. तन.

[3] A. नं वेत्यर्थः L. नेत्यर्थः

[4] A. C. नानार्थं प्रज्ञानार्थम् .

[5] T. begins here.

[6] T. omits इति.

[7] A. पाकग्रयणं.

पाकयज्ञेषु[1] च ब्रह्मा भवति वा नवेति। धन्वन्तरियज्ञे[2] च शूलगवे च[3] न विकल्पः। किं नित्यः। आहोस्विदनित्यः[4]। नित्यः। कस्मात्। दर्शनात्। ब्रह्माणमग्निं चान्तरा। तथा वैद्यं चरित्रवन्तं[5] ब्रह्माणमिति। अभावे दर्शनं[6] नोपपद्यते। तस्मान्नित्यः। यद्येवं[7] प्रतिषेधोऽनर्थकः। अस्मादेव दर्शनात् नित्यो भविष्यति। नेत्युच्यते[8]। पक्षे दर्शनस्य कृतार्थत्वात् प्रतिषेधो वक्तव्यः। का पुनः प्राप्तिः। अस्य दर्शनान्नित्यः। सर्वकर्मणामित्येषा। तत्र य एते विकल्पार्था विहिताः किमेतेषां सह क्रिया अक्रिया वेति। आहोस्विदिच्छातः[9]। इच्छातो[10] नित्यत्वं न वेति[11]। कुतः। आचार्यप्रवृत्तिदर्शनात्[12]। यच्छूलगवे ब्रह्मणो नित्यत्वं विदधाति[13]। कथं परिस्तरणं स्यात्। नित्यत्वात् ब्रह्मणोऽपि नित्यत्वम्। एवं सिद्धे[14] ब्रह्मणो नित्यत्वाविधानादिच्छाविकल्पो भवतीति सिद्धम्॥

[1] Before this A. C. have ब्रह्मा च. L. does not give even the pratika.

[2] Before this L. C. have धन्वन्तरियज्ञशूलगववर्जम्. (L. has वर्जे instead of वर्जम्). A. has only धन्वं वर्जं.

[3] L. C. omit this च.

[4] C. has only the इ mark in स्वि, but not the consonant part स्व.

[5] A. वैद्य चरित्रवतं; C. वैद्यं चरित्रवंत; T. वेद्यं चरितव्यं.

[6] A. दर्शन.

[7] A. यद्येव.

[8] L. वेत्युच्यते.

[9] In A. the letter between दि and तः not at all distinct. It looks like ठा. T. आहोस्विदिच्छतः

[10] C. इच्छति.

[11] C. has एवं सिद्धे ब्रह्मणा नित्यत्वे in brackets extra between नित्यत्वं and नवेति.

[12] L. आचार्याप्रवृत्तिदर्शनात्.

[13] C. नित्यत्वं दधाति.

[14] A. एव सिद्धे.

तथेति वर्तते । पाकयज्ञेष्विति च । ब्रह्मा च सर्वेषु पाकयज्ञेषु कृताकृतो भवति धन्वन्तरियज्ञं शूलगवं च वर्जयित्वा । अथ तयोर्नित्यो भवति उत नैव भवति । नित्यो भवतीति ब्रूमः । कुतः । तयोरुपदेशात् । 'ब्रह्माणमग्निं चान्तरा' । 'वेद्यं चरित्रवन्तं ब्रह्माणमुपवेश्य' इति च । तर्हि तस्मादेव नित्योऽस्तु । किमनेन इति च शङ्का न कार्या । अस्मिन् विकल्पप्रतिषेधेऽसति उपदेशस्य पक्षे कृतार्थत्वात् । तयोरपि ब्रह्मा चौलवत् कृताकृतः स्यात् । ब्रह्मास्ति चेत् प्रणीताप्रणयनात् पूर्वं समस्तपाण्यङ्गुष्ठो भूत्वाग्रेणाग्निं परीत्य दक्षिणतः कुशेषु 'निरस्तः परावसुः' इति तृणं प्रत्यग्दक्षिणान्निरस्य 'इदमहमर्वावसोः सदने सीदामि' इति मन्त्रेणोपविशेत् । ततो बृहस्पतिर्ब्रह्मा ब्रह्मसदन आशिष्यते । 'बृहस्पते यज्ञं गोपाय' इत्यन्तं ब्रह्मजपं जपेत् । ततो 'ब्रह्मन्नपः प्रणेष्यामि' इति कर्तातिसृष्टो 'भूर्भुवः स्वर्बृहस्पतिप्रसूतः' इति जपित्वा 'ॐ प्रणय' इत्यतिसृजेत् । केचिदतिसर्जनं प्रत्यतिसर्जनञ्च नेच्छन्ति । कर्मान्ते प्रायश्चित्तानि संस्थाजपं च कुर्यात् । सर्वदा यज्ञमना भवेदुदङ्मुखश्च ॥ (६)

अमुष्मै स्वाहेति जुहुयात् ॥

क[1] । पाकयज्ञेषु इत्यधिकारात् । अमुष्मै इति सर्वनामनिर्देशो देवतार्थः । चतुर्थ्या देवतामादिश्य[2] स्वाहाकारान्तैर्जुहुयात्[3] । किं पुनरत्र विधीयते । स्वाहाकारान्तता[4] । एवं तर्हि न विधेया सा[5] । कस्मात् । स्वाहाकारान्तैरिति[6] सिद्धत्वात् । एवं चतुर्थ्युपदेशार्थम् । तथापि न

[1] A. has before this अमुष्मै यात. L. has अमुष्मै स्वाहेति जुहुयादिति. C. quotes the entire Sūtra. A. has क्रि instead of क. L. Omits क.

[2] C. देवतादिश्य.

[3] C. स्वाहाकारान्तैर्जुहुयात्.

[4] A. स्वाहाकारान्तज्ञा. Perhaps it is for स्वाहाकारान्तसंज्ञा.

[5] L. omits सा.

[6] A. स्वाहाकारान्तैरिति.

कर्तव्यम् । लक्षणान्तरप्रसिद्धे[1] स्वाहाकारसंयोगे चतुर्थीविभक्तिः[2] आम्नाता नमःस्वस्तिस्वाहेत्येवमादिषु । एवं तर्हि ऋङ्निवृत्त्यर्थम्[3] । क[4] । अथ[5] काम्या इत्यत्र देवानां ऋच उपदिष्टाः[6] । तत्र संदिह्यते । किं ताभिः ऋग्भिः[7] होम उक्तः उत[8] देवतादेशेनेति । तथा प्राजापत्यस्य स्थालीपाकस्येति । अत्र कुतः पुनः संशयः । उभयथा दृष्टत्वात् । तद्देवत्यैश्च[9] मन्त्रैः[10] होमो दृष्टः । अग्ने नय सुपथा राये अस्मान् इत्यत्र ऋग्भिः होमो दृष्टः । तथा देवतापदैः सावित्र्यै ब्रह्मणे इत्येवमाद्यैः । तेन यत्र दृश्यन्ते ऋचो देवतादेशो वा तत्र विकल्पः प्राप्नोति । किमुदाहरणम्[11] । अथ काम्यानां[12] स्थाने[13] चरवः इति । तन्निवृत्त्यर्थममुष्मै स्वाहेति जुहुयादित्यारभ्यते ॥

क्वचिन्नामधेयेन होम उक्तः 'सावित्र्यै ब्रह्मणे' इत्यादि । क्वचिन्मन्त्रेण होम उक्तः 'अग्ने नय सुपथा राये अस्मान्' इति चतसृभिरिति । यत्र तु उभयथा

[1] L. लक्षणान्तरे प्रसिद्धे. A. लक्षणातरप्रसिद्धे.

[2] A. चतुथीविभक्तिः

[3] C. एवं तर्हिङ्निवृत्यर्थम् .

[4] L. omits क,

[5] A. अथा.

[6] C. उपरिष्टां.

[7] A. सि instead ग्भि. C. ऋभि instead of ऋग्भिः

[8] A. होमस्तु उक्त. L. होमस्तु उक्ता. C. होमस्तु उत. Perhaps to read होमोऽस्तु उत.

[9] C. तद्देवत्यैश्च.

[10] L. omits this word.

[11] A. किमुदाहरण.

[12] A. काम्यानी.

[13] L. has काम्याः after स्थाने and before चरवः and चरमः instead चरवः C. omits चरवः

तत्र तु नामधेयेन कथं होमः स्यात् इत्येतत् सूत्रम् । प्राजापत्यस्य स्थालीपाकस्य हुत्वा काम्याश्चरव इत्यादौ ॥ (७)

अग्निरिन्द्रः प्रजापतिर्विश्वेदेवा ब्रह्मेत्यनादेशे ॥

अग्निरित्येवमाद्या[1] देवताः पाकयज्ञेषु भवन्ति । कुतः । पाकयज्ञाधिकारात् । सर्वेषु नेत्युच्यते । न आदेशः अनादेशः । तस्मिन् अनादेशे[2] कर्मणि चोद्यमाने देवता यत्र नादिश्यन्ते[3] तत्रैता[4] देवता भवन्तीत्युच्यते । किमुदाहरणम् । जातकर्मान्नप्राशन इत्येवंप्रकाराणि । एवं चेदतिप्रसङ्गः । रथारोहणब्रह्मयज्ञ इत्येवंप्रकारेष्वतिप्रसङ्गः । न चेष्यते । तस्मान्नायमर्थः । एवं तर्ह्यनादेश[5] इति मन्त्राणां[6] अनादेशं[7] अपेक्षते । यत्र होमा आदिष्टाः[8] मन्त्रा न विहिताः तत्रैते मन्त्रा भवन्तीति सिद्धम् । नेत्यपरे । कस्मात् अर्थविरोधात् । आसां देवतानामनिर्दिष्टद्रव्यत्वात् आज्यमिष्यते । इह च चैत्ययज्ञे चरुः पशुर्वा भवति । तस्य च

[1] Before this L. has अग्निरिन्द्र इति. A. has अग्नि देशो: T. has अग्नि . . देशे . . C. quotes the entire Sūtra (प्रजापतिविश्वे instead of प्रजापतिर्विश्व) The passage न आदेश अनादेशः तस्मिन् अनादेशे appears after the sūtra and before this in L. and C. L. omits न; C. has नि instead of न.

[2] This passage from न omitted in L, but was put in the beginning of the commentary. C. repeats it here, but omits the word अनादेशे.

[3] L. नादृश्यन्ते.

[4] T. तत्रेता.

[5] L. तर्ह्यभ्यदेश. C. तर्ह्यन्यदेश.

[6] A. has मन्त्राणामनादेश इति extra after इति and before मन्त्राणां.

[7] L. अनोदेशं.

[8] L. C. होमादिष्टाः

होमः । तत एव च बलिहरणम्[1] । तस्मात् सैव चैत्यदेवता भवतीत्युभयत्र[2] । एवं च सिद्धे[3] मन्त्रे इदमाद्युदाहरणं[4] चौलादिषु । ननु तत्रापि मन्त्राणामुपदिष्टत्वात्[5] न प्राप्नुवन्तीति । नैके कांचनेत्येवं[6] प्रतिषिद्धेषु पूर्वोक्तेषु मन्त्रेषु तत्रैते यथा स्युरिति कल्पयन्ति । अस्ति प्रयोजनम् । ननु नित्यपक्षेणैवम् । अपरे त्वन्यथा कल्पयन्ति अनादेशवचनम् । न आदेश अनादेशः । क्व पुनरयमनादेशः[7] । शास्त्रे यत्र होमोऽनादिष्टः तत्रैते मन्त्रा भवन्ति । शास्त्रे[8] अनोदितानां[9] कथं प्रवृत्तिरिति । अनादेशशब्दस्य सापेक्षत्वात् किमपेक्षते[10] । अन्यत्रादेशं अपेक्षते[11] । अत एव शास्त्रे[12] अनादिष्टानां लोके आदिष्टानां कथमेते मन्त्राः[13] स्युः इति वचनम् । कथं पुनरेतत् ज्ञायते अयमर्थ इति । लोकप्रवृत्तिदर्शनात् । तद्यथा लोके विवाहे चतुर्थ्यां[14] प्राच्यप्रतीच्योदीच्यदाक्षिणात्यैः सर्वैरविसंवादेन[15] एतत्कर्म

[1] What is written in A. and L. looks more like वह्लिहरणम. C. has बलिहरणम् clearly.

[2] C. भवतीत्युभयच.

[3] A. एवं सिद्धे. L. एवं च सिद्धो. C. एवं चे सिद्धो.

[4] A. मन्त्र इदमाद्युंदाहरणं. L. मन्त्रहहमाद्युदाहरणं. C. मन्त्र इहामाद्युदाहरणं.

[5] C. मन्त्राणमुपदिष्टत्वात्.

[6] A. नैके कांचनेत्वेत्येवं. C. नैकेषां च नेत्वेवं.

[7] A. क्व पुनरनादेशः

[8] L. शास्त्रे.

[9] L. अनाहितानां. T. अमोदितानां.

[10] L. omits किमपेक्षते. C. has किमेक्ष्यात्.

[11] A. C. अपेक्ष्यते.

[12] The reading is only a conjecture. A. has अतवे शास्त्रे. L. असो. शास्त्रे. C. अतो शास्त्रे. T. अलोके शास्त्रे.

[13] C. मं instead of मन्त्राः

[14] A. चतुर्थ्या.

[15] L. C. सर्वैरपि संवादेन.

परिगृहीतम्[1] । न चान्यशास्त्रे अन्या च प्रवृत्तिरस्ति[2] । तस्मात्[3] गृह्यतामेतत् यथा शास्त्रे अनादिष्टानामेते मन्त्रा भवन्तीति[4] । एतदेवोदाहरणम् । अन्यदप्यस्ति । लोके संज्ञापरिग्रहात् । जातकर्मणि येषां चोदितपाठः । तथा विवाहे प्रस्थानकर्मणि । बलदेवयागे च । एवंप्रकाराणि लोके लौकिकान्यपि[5] द्रष्टव्यानि । एवमनादेशशब्दस्यानवस्थितत्वादेवमपरे कल्पयन्ति ॥

यत्र होमस्यानादेशः कर्मणश्चादेशस्तत्रैता देवता होतव्याः । कुत्र । जातकर्मादौ । तर्हि रथारोहणेऽपि स्यात् । एवं तर्हि अन्यथा व्याख्यास्यामः । यत्र होमश्चोद्यते न मन्त्रः चौलकर्मादौ 'नैके काञ्चन' पक्षे तत्रैताभ्यो देवताभ्यो जुहोति । मन्त्रानादेश इतीयमेव व्याख्या साध्वी । मन्त्रप्रकरणत्वात् । तेन जातकर्मादौ न होमोऽस्ति । अन्ये तु पूर्वोक्तदोषपरिहारेण वर्णयन्ति । यत्र परशास्त्रे होमश्चोद्यते स्वशास्त्रे तु कर्ममात्रं तत्रैता देवता भवन्तीति । क । जातकर्मादौ ॥ (८)

## एकबर्हिरिध्माज्यस्विष्टकृतः स्युस्तुल्यकालाः ॥

बर्हिश्च[6] इध्मश्च आज्यं च स्विष्टकृच्च बर्हिरिध्माज्यस्विष्टकृतः । बर्हिरिध्माज्यस्विष्टकृत् एकं येषां[7] ते एते एकबर्हिरिध्माज्यस्विष्टकृतः । के । पाकयज्ञाः । स्युर्भवेयुः । कतमे । तुल्यकालोपदेशात् समानकालो-

[1] C. परिगृगृहीताम्.

[2] A. अन्यामप्रवृत्तिरस्ति. C. अन्यामप्रवृत्तिरस्ति. T. अल्यप्रवृत्तिरस्ति.

[3] C. तस्मात्.

[4] T. has सिद्धं after this.

[5] T. has लौकिकानि शिष्टान्यपि.

[6] Before this A. has एकबर्हिकालाः L. has एकबर्हिरिति. C. quotes the entire Sūtra.

[7] A. एषां.

पदेशात् । समानकाला[1] इत्यर्थः । एषां[2] पाकयज्ञानां समानकालाः । किमुदाहरणम् । आश्वयुज्यामाश्वयुजीकर्म । तत्राग्रयणमपि प्राप्नोति । पार्वणः काम्यश्च[3] । काम्यसंयोगादेतेषां कालान्तरप्रयोगोपपत्तेः । इदमन्यदुदाहरणम्[4] । सर्व एवाभिषिक्तस्य प्रत्युद्धारः पुत्रजन्मना व्याख्यात इत्येवं प्रत्युदाहरणानि[5] । अथवा[6] पूर्वोक्तमप्युदाहरणं भवति । आग्रयणं ब्राह्मणस्य कर्तुरिच्छातः[7] शरदि प्रवृत्तिः । आश्वयुज्यापि[8] शरदि भवति । तस्मादेवाभ्युपपन्नमुदाहरणम् । अथ बर्हिरादीनामनुक्रमणं परिसंख्यानार्थमाहोस्वित्[9] निदर्शनार्थम् । किं पुनश्चिन्तायाः प्रयोजनम् । परिसमूहन[10]-पर्युक्षणाज्यभागपूर्णपात्राणां तदनेकक्रियायाः[11] प्राप्नोति यदि परिसंख्यानम् । अथ चेन्निदर्शनार्थं[12] एतेषामपि[13] सकृत् क्रिया प्राप्नोति । निदर्शनार्थमिति वर्णयन्ति । तस्मादेतेषां सकृत् क्रियेति सिद्धं भवति ॥

[1] C. समानकालाय. The commentary seems to have another reading of the Sūtra. The text has तुल्यकालाः There is no word तुल्यकालोपदेशात्.

[2] C. येषां.

[3] A. repeats काम्यश्च.

[4] C. इदमृत्युदाहरणम्.

[5] A. प्रतुदाहरणा.

[6] C. आज्यवा.

[7] L. C. कर्तुरिच्छन्तः

[8] D. आश्वयुज्यापि.

[9] A. परिसंख्यानार्थं माहोस्वित. T. परिसंख्यानार्थ आहोस्वित्.

[10] L. परिसमूस्तमूहन.

[11] C. तदेमनेकक्रियायाः

[12] C. अथन्वेन्नेदर्शनार्थं.

[13] A. The first letter in this word looks more like a full stop than like ए. This is only a stroke. It may also be read as र.

एकबर्हिरादिर्येषां पाकयज्ञानां ते तथोक्ताः[1] । तुल्यकाला एककालाः । एकस्मिन् काले यद्यनेके पाकयज्ञाः कार्यत्वेन प्राप्ताः तदा ते समानतन्त्राः कार्या इत्यर्थः । किमुदाहरणम । यदा पर्वणि रात्रौ काम उत्पद्यते तदा काम्यपार्वणयोरेककालत्वम् । यदा वाग्रयणाश्वयुजी कर्मणी आश्वयुज्यां क्रियेते तदा तयोरेककालत्वम् ॥ (९)

तदेषाभियज्ञगाथा गीयते—

पाकयज्ञान् समासाद्य एकाज्यानेकबर्हिषः ।
एकस्विष्टकृतः कुर्यान्नानापि सति दैवते ॥

इति ॥

तुल्यकालानां[2] पाकयज्ञानां एकत्वविधानं[3] प्रति यज्ञगाथा[4] उदाह्रियते[5] पाकयज्ञान् समासाद्य इति । निगदव्याख्याता । किमर्थं पुनरुक्तार्था गाथा[6] उदाह्रियते[7] । संशयनिवृत्त्यर्थं यज्ञगाथोदाहरणम् । योऽसौ उक्तः संशयः परिसंख्यानार्थं[8] निदर्शनार्थं वा[9] इति तस्य निवृत्तिः क्रियते । एतेषा निदर्शनार्थेना साध्यते[10] । कथम् । यज्ञगाथेयं[11] पूर्वोक्तानामर्थात् सर्वेषां

[1] The reading of the sūtra according to this commentary seems to be एकबर्हिरादयः स्युस्तुल्यकालाः

[2] L. A. and C. quote तदेषाभियज्ञगाथा गीयते. L. has इति also.

[3] C. पाकयज्ञानामेकत्वविधानं.

[4] A. यज्ञगाथ.

[5] A. L. C. have पाकयज्ञान समासाद्य इति here.

[6] C. यज्ञगाथा.

[7] C. दाह्रियते. The initial उ missing. It ought to have been written गाथोदाह्रियते.

[8] A. L. C. T. have only परिसंख्यनं. I have altered it to परिसंख्यानार्थं.

[9] वा is not in any MS. I have added it.

[10] L. A. C. T. साध्यता.

[11] A. यज्ञगाथेय.

अनुद्रवणं करोति । परिसंख्यानत्वे सत्यपि सर्वेषामनुद्रवणं प्राप्नोति । तस्मान्निदर्शनार्थतेति सिद्धम् । किं चान्ययज्ञगाथोदाहरणेन[1] सिध्यति । नानापि सति दैवते इति[2] । नानादेवत्येष्वपि । अपिशब्दः संभावनायाम् । किं पुनः संभावयति समानदेवतानां[3] तेन । समानदेवतेषु बर्हिरादीनामेव सकृत् क्रिया नान्यस्याः । प्रधानाहुतेः[4] सकृत् क्रिया[5] माभूदिति प्रयोजनम् ॥

बर्हिरादिग्रहणस्य तन्त्रोपलक्षणार्थतां स्पष्टयितुं यज्ञगाथामुदाहरति । तस्मिन्नर्थे एषा यज्ञगाथाभिगीयते पठ्यते । बहून् पाकयज्ञानेकस्मिन् काले समासाद्य प्राप्य एकाज्यानेकबर्हिषः एकस्विष्टकृतः कुर्यान्नानापि सति दैवते । न प्रतिदैवतं तन्त्रमावर्तयितव्यमित्यर्थः ॥ (१०)

इति तृतीया कण्डिका

---

उदगयन आपूर्यमाणपक्षे कल्याणे नक्षत्रे चौलकर्मोपनयनगोदानविवाहाः ॥

उदगयदा[6] गच्छत्यादित्यः तदुदगयनम्[7] । तस्मिन् उदगयने । कुत एतत् । लोकप्रसिद्धत्वात् । आपूर्यमाणपक्ष इति । आपूर्यमाणस्य पक्ष

[1] L. किंच यद्यज्ञगाथोदाहरणं. A. C. T. किंचान्ययज्ञगाथोदाहरणं.

[2] A. has only नाना वत इति.

[3] L. T. समानदेवता: A. समानवेव्रतानाः

[4] C. प्रधानाहुतः A. प्रधानाहुतिः

[5] A. सहक्रिया.

[6] Before this A has उदगयन वाहा ; L. उदगयन इति ; C. quotes the entire sūtra.

[7] C. तमुदगयनम् .

आपूर्यमाणपक्षः। कस्य आपूर्यमाणस्येति। चन्द्रमसः। एवं सति पक्षो नोपपद्यते। कथम्। मासस्य पक्षो न चन्द्रमसः। तस्मादर्थानुपपत्तिः। अथान्यो[1] विग्रहः[2] आपूर्यमाणश्चन्द्रमा[3] यस्मिन् पक्षे इत्येवमस्तु। एवमपि समासो नोपपद्यते। तस्मादन्यथा विग्रहः। आपूर्यमाणश्चासौ पक्षश्चेत्येवमस्तु[4]। केन[5] पुनरापूर्यते पक्षः[6]। शुक्लेण[7] ज्योतिषा। पूर्वोऽपि विग्रह उपपद्यते। कथम्। स हि[8] मासानां चार्धमासानां[9] च[10] कर्ता। यस्माच्चन्द्रमसोऽपि[11] पक्ष उपपद्यते। तस्मिन्नापूर्यमाणपक्षे[12]। कल्याणे नक्षत्रे[13]। कल्याणमिति प्रशस्तम्[14]। शास्त्राविरुद्धमित्यर्थः[15]। तस्मिन् कल्याणे नक्षत्रे। एवमेतैः संयुक्तायां तिथौ चैलादीनि[16] कर्माणि भवन्ति। अथ कर्मग्रहणं[17] किमर्थम्। सर्वकर्मणां प्रवृत्तिरुदगयने यथा स्यात् यथा व्रतादेशादीनाम्। यदि कर्मग्रहणस्यायमर्थः चौलादीनां पृथग्ग्रहणमपार्थकम्। कस्मात्[18]।

[1] T. अयमन्यो.
[2] A. विग्राहः
[3] A. आपूर्यमाणाश्चासौ.
[4] L. A. पक्षश्चेवमस्तु.
[5] C. omits this word.
[6] A. L. पक्षे. C. omits this word.
[7] A. शुक्लेन. C. शुक्लपक्षेन.
[8] L. तर्हि intead of स हि. C. म हि.
[9] A. त्रार्धमासानां.
[10] A. L. T. omit च.
[11] A. चन्द्रमसोमपि.
[12] A. तस्मिन्नापूर्यमाणपक्षेः
[13] A. नक्षत्रे.
[14] C. has शास्त्र within brackets before प्रशस्तम्.
[15] C. ends with शास्त्रा.
[16] A. चौलालादीनि.
[17] A. कर्मग्रहणी.
[18] A. पृथग्ग्रहणमपार्थं कस्मात्.

एतेषामपि कर्मग्रहणेनैव ग्रहणं[1] भविष्यति । उच्यते । चौलादीनां[2] ग्रहणं कर्तव्यमेव । किं कारणम् । वक्ष्यति तेषां पुरस्ताच्चतस्र आज्याहुतीर्जुहुयादिति[3] । कथमेता आहुतयश्चौलादिषु[4] स्युरिति[5] । अतश्चौलादीनां पाठः । अथवा कर्मग्रहणं चौलार्थमेव[6] । चौलकर्मेति । तृतीये वर्षे चौलमित्यत्र कर्मग्रहणं नास्ति । एकदेशग्रहणं तत्र द्रष्टव्यम् । अयमेव सुतसंभव[7] उपपद्यते[8] । अथ व्रतादेशेष्वयं कालो न प्राप्नोति । कस्मात् । इहाग्रहणादित्युच्यते[9] । प्राप्स्यति[10] । कुतः । एतेन वापनादिति[11] व्यपदेशात् । यदि तर्हि व्यपदेशेन कालोऽपि प्राप्नोति एवं तर्हि गोदानग्रहणं अपार्थकम्[12] । कस्मात् । चौलकर्मव्यपदेशात् एतेन गोदानं षोडशे वर्षे इति । सत्यमेतत् । गोदानव्यपदेशात् कालः सिध्यति । तेन[13] गोदानार्थं[14] ग्रहणम्[15] । अत्र किमर्थम् । तर्हि यत्र[16] गोदानसंबन्धः स्वल्पोऽप्यस्ति तत्रापि[17] कथमयं कालः

[1] All MS. read कर्मग्रहणं instead of ग्रहणं.

[2] A. लाचैदीनां.

[3] A. L. T. वक्ष्यति.

[4] A. आज्याहुतीजुहयारदिति.

[5] L. आहुतयश्चौळाविवि.

[6] A. स्युरितिः

[7] A. चौलाथमेव.

[8] A. सुंतसंभव'

[9] A. उपपद्येते.

[10] A. T. इहाग्रयणादुच्यतेः. L. इहाग्रयणादित्युच्यते.

[11] L. प्राप्स्यसि.

[12] A. T. वापनादिति.

[13] A. अपार्थके.

[14] L. तर्हि instead of तेन.

[15] A. L. गोदानार्थ.

[16] A. has यर्हि extra between तर्हि and यत्र.

[17] In A. तत्रापि is repeated.

स्यादित्यनेन[1] गोदानग्रहणं[2] क्रियते । यथा गौदानिकं कर्म कुर्वीतेति । अत्र कर्मग्रहणात् कर्मैव कुर्वीत । ननु च तत्रापीदं[3] कर्म प्रयुज्यते[4] । तेन यथादृष्टं[5] यस्मिंश्च काले दृष्टं[6] तस्मिन् काले[7] भविष्यतीति । यत्नादत्ते[8] कालस्तत्र न प्राप्नोति । तस्मात्तत्र[9] हि गौदानिकं कर्म कुर्वीतेति कर्म-ग्रहणात् कालो न प्राप्नोति । आचार्यसकाशे वाचं विसृजेतेति एवमादिषु यथा न भवति । कर्मग्रहणादेव कालान्तरे न प्राप्नुयात् । तत्र[10] तेनायं यत्नः क्रियते । यदि समावर्तनार्थं तस्यैव[11] ग्रहणं[12] कर्तव्यम् । एवं तर्हि लघ्वर्थं गोदानग्रहणम् ॥

अनेन चौलकर्मादीनां कालो विधीयते । उदक् यदा गच्छत्यादित्यः तदुदगयनम् । तथा लोकप्रसिद्धेः । आपूर्यमाणस्य चन्द्रस्य यः पक्षः स तथोक्तः । स हि मासस्य च पक्षस्य च कर्ता । अथवा आपूर्यमाणश्चासौ पक्षश्च आपूर्यमाण-पक्षः । स हि चन्द्ररश्मिभिरापूर्यते । शुक्लपक्ष इत्यर्थः । ज्योतिःशास्त्राविरुद्धं कल्याणं नक्षत्रम् । चौलकर्मेति चौलस्यैव संज्ञान्तरं न तु व्रतादेशानामयं काल इष्यते । स कथं प्राप्नोति । उपनयनातिदेशात् । तर्हि अत्र गोदानग्रहणमपार्थकं चौलातिदेशात् । उच्यते । समावर्तनार्थं गोदानग्रहणम् । ‘गौदानिकं कर्म

[1] In A. there is ठ extra between ने and न with two small strokes above, perhaps to indicate its deletion.

[2] A. गोदानग्रहणां.

[3] A. तत्रापीदी.

[4] A. प्रमुञ्जते.

[5] A. यथादष्टं.

[6] A. दष्टं.

[7] A. कले.

[8] A. यत्रादत्ते.

[9] A. तस्मात्रत्र.

[10] L. तेत्र.

[11] L. तथैव.

[12] A. ग्रदणा.

कुर्वीत' इति कर्मग्रहणं यथा कर्मणोऽन्यनियमे वाग्यमनादिकं निवर्तयति तथा कालमपि निवर्तयेत् । तस्मात् गोदानग्रहणं यत्र गोदानगन्धोऽप्यस्ति तत्रापि यथा स्यात् । तर्हि समावर्तनग्रहणमेव कार्यम् । उच्यते । लाघवार्थं गोदानग्रहणम् ॥ (१)

## सार्वकालमेके विवाहम् ॥

एके[1] आचार्याः सर्वस्मिन् काले विवाहमिच्छन्ति । किं पुनः कारणम् । यदातिवयसा स्यात्काले उदीक्षमाणे दोष उपजायते । को दोषः ।

ऋतुमत्यां[2] हि तिष्ठन्त्यां दोषः पितरमृच्छति ।

इति । एवमन्ये च लौकिका दोषाः संपद्यन्ते निग्रहादयः । एवमेतैरन्यैश्च कारणैः कालानियमः स्यात् ॥

एके आचार्याः सर्वस्मिन् काले विवाहमिच्छन्ति । नोदगयनादिनियमः । तेषां कोऽभिप्रायः । दोषश्रवणात् ।

ऋतुमत्यां हि तिष्ठन्त्यां दोषः पितरमृच्छति ।

इति । अन्ये च लौकिका दोषाः समुत्पद्यन्ते ॥ (२)

## तेषां पुरस्तात् चतस्र आज्याहुतीर्जुहुयात् ॥

चौलादीनां[3] ग्रहणं स्वयमेव भविष्यतीति तेषामेवाधिकारः[4] । तस्मात् तेषामिति न वक्तव्यम् । अनन्तरो विवाहः अधिकृतः[5] ।

[1] Before this A. has सार्ववाहं ; L. has सार्वकालमिति.

[2] L. ऋतुमती. ; A. ऋतुमत्यी.

[3] Before this, A. has तेषां प्रहुयात् and gives the pratika तेषामिति separately. L. has तेषामिति.

[4] In A. L. T. after भविष्यतीति there is the following passage extra before तेषामेवाधिकारः This extra passage occurs later in its proper place. विवाहे चतुर्थी यद्विवाहग्रहणं करोति सर्वत्रैता आहुतयः

[5] All MSS. read विवाहः कृतः But this must be the reading.

तन्निवृत्त्यर्थं तेषामित्युच्यते । तन्नोपपद्यते[1] । दर्शयिष्यति यथा सर्वेषामेवैता आहुतयो भवन्ति इति[2] । विवाहे चतुर्थी इति[3] विवाहग्रहणं करोति । नेन सर्वत्रैता आहुतयो भवन्तीति सिद्धम् । तेषामिति न वक्तव्यम् । तत्रैके तेषां पुरस्तादिति[4] पुरस्तात् होमा एते भवन्तीति । एवं संप्रतिपन्नाः[5] प्राच्याः । यद्येवं[6] तेषांग्रहणं अपार्थकमेव[7] । पुरस्तादित्येव[8] पुरस्तात् होमः सिद्धः । अपरे आहुः । तेषांग्रहणं पुरस्तात् होमनिवृत्त्यर्थम् । तेषामेव चौलादीनामेता आहुतयो भवन्ति[9] । तत् पुरस्तात् भवन्तीति । एतस्मिन्नर्थे पुरस्ताद्ग्रहणमपार्थकम्[10] । पुरस्तादेव[11] एता आहुतयो भवन्तीति नान्यः । का पुनरन्या । स्विष्टकृत एव ब्रुवता[12] किं साधितं[13] भवति । एतेषु कर्मस्वेता[14] आहुतीर्हुत्वा प्रतिविशिष्टं च कृत्वा कर्मस्विष्टकृदुत्तमा भवति । अन्यत्र तु प्रधानाहुतिभ्योऽनन्तरमेव[15] स्विष्टकृद्भवतीति साधयति । यथा अनवलोभनकर्मणि[16] हृदयदेशालम्भादूर्ध्वं[17] स्विष्टकृद्भवति । तथाश्वयुज्यां

[1] A. तन्नोपपद्यते.
[2] This word omitted in all MSS.
[3] A. चतुर्थामिति ; L. T. चतुर्थमिति.
[4] This word omitted in all MSS.
[5] एवं सति संप्रतिपन्नाः in all MSS.
[6] यद्येव in all the MSS.
[7] T. अपार्थकमवं.
[8] A. मुरस्तादित्येवं ; T. L. पुरस्तादित्येवं.
[9] A. भवेति.
[10] A. पुरस्तादग्रहणमपपार्थकम्. Then प between म and पा deleted with two small vertical strokes above it.
[11] A. पापुरस्तादेव व.
[12] A. ब्रवता.
[13] A. Looks more like साधिते.
[14] A. यथातवलाभनकर्मणि.
[15] A. प्रधानाहुतिभ्योऽनन्तरमेत्र.
[16] A. यथाऽतवलाभनकर्मणि.
[17] A. हृदयदेशालेभ ऊर्ध्वं ; L. हृदयदेशालम्भऊर्ध्वं.

स्विष्टकृतः प्राक्[1] दिशामुपस्थानम् । एवंप्रकाराणि उदाहरणानि[2] । नेत्यपरे । सर्वत्रैव स्विष्टकृदुत्तमा भवति । तत्र तत्र पुनर्विभावयिष्यामः । तस्मात् पुरस्ताद्ग्रहणमेतदर्थं क्रियमाणमपार्थकम् । चतस्र एवैता भविष्यन्ति ॥

तेषांग्रहणं किमर्थम् । विवाहस्यानन्तरत्वात् सर्वेषां प्राप्त्यर्थमिति चेत तन्न । दर्शनात सर्वेषां स्युः । यदयं विवाहे चतुर्थीमित्याह । उच्यते । तेष सम्बन्धिन्यः अन्तर्वर्तिन्यः एता आहुतयो भवन्ति न तु तेभ्यः पूर्वं भवन्तीत्येवमर्थं तेषांग्रहणम् । तर्हि पुरस्ताद्ग्रहणमपार्थकम् । न । प्रयोजनमुपरिष्टाद्वक्ष्यामः सङ्ख्यावचनं किमर्थम् । तत्रैके ब्रुवते । यत्र परिमाणवचनं प्रत्यृचग्रहणं वा नास्ति 'धाता ददातु दाशुष इति द्वाभ्यां' इत्यादौ तत्र कथं प्रत्यादेशं होमः स्यादिति । तदसत् । एकमन्त्राणि कर्माणीति न्यायात् । अपि च । स्वाहाकारान्तैर्मन्त्रैरिति प्रतिमन्त्रं स्वाहाकारः प्राप्तः । स च प्रदानार्थः । न च तमतिक्रम्य होतव्यमिति युक्तं वक्तुमस्य विद्यमानायां गतौ । तेन सर्वत्र प्रत्यृचमेव होम इति सिद्धम् । का पुनरस्य गतिः । तत्रैके नियमार्थमिति प्राहुः । समुच्चयपक्षेऽपि कथं चतस्र एव स्युः न बह्वय इति । कथं प्रयोगः । एकैकस्या ऋचोऽन्ते एकैका आहुतिरिति । तदप्यसत् । प्राधान्येनाहुतिविधिप्रकरणत्वात् आहुतिसमुच्चय एव न मन्त्रसमुच्चयः । किमर्थं तर्हीदम् । नियमार्थमेव । चतस्र एव स्युरिति । तेनाज्यभागौ न भवतः । तर्हि स्विष्टकृदपि न स्यात् । न । पुरस्तान्नियमार्थं हि पुरस्ताद्ग्रहणं कृतम् । आचारौ तु स्त एव अनाहुतित्वात् । आज्यग्रहणं परिस्तरणविकल्पार्थम् ॥ (२)

**अग्न आयूंषि पवस इति तिसृभिः प्रजापते न त्वदेतान्यन्य इति च व्याहृतिभिर्वा ॥**

[1] A. T. omit स्विष्टकृतः प्राक्.

[2] A. उदाहरणाति.

तस्मादुपदेशादेव[1] चतस्रो भवन्ति स्वाहाकारान्तैर्मन्त्रैरिति[2]। प्रत्यृचं मन्त्रपरिसमाप्तिं[3] कुर्वीतेति[4]। एवं सिद्धे यच्चतस्रग्रहणं करोति तज्ज्ञापयति अन्यत्र प्रत्यादेशं होमो भवति। तेन धाता ददातु दाशुषे इति द्वाभ्यां इत्येवमादिषु। कथं चैतत् गम्यते। यथा प्रत्यादेशं[5] होमो भवतीति[6]। येन कश्चिद्यत्नं करोति प्रत्यृचमिति[7]। तेन यत्र यत्नो नास्ति प्रत्यादेशं होमो भवति[8] एतत् सिद्धमेके। अन्ये पुनर्नैवम्। कथं तर्हि प्रत्यृचमिति होमः सर्वत्र। ततः स्वाहाकारान्तैः[9] मन्त्रैः। ऋगन्ते च स्वाहाकारो भवति। स्वाहाकारस्य प्रदानार्थत्वात्[10]। न च स्वाहाकार-मतीत्य द्वितीयो मन्त्रो[11] वक्तव्य इति। एकस्यां च क्रियायां[12] अनेके मन्त्रा वक्तव्या इतीदं चायुक्तं विद्यमानायां गताविति। तस्मात् सर्वत्र प्रत्यृचमेव होमो भवति। ननु चतस्रग्रहणं अनर्थकं[13] प्रत्यृचग्रहणमिवेति[14]।

[1] Before this A. has अग्न आयूंषि पवस इतिन्य इति. L. has अग्न आयूंषि पवस इति.

[2] A. स्वाहाकारीतैर्मंत्रे इति.

[3] A. मन्त्रः परिसमाप्तिं. L. भवतः परिसमाप्तिं.

[4] A. कुर्नीतेति.

[5] L. प्रत्यादेशां

[6] A. भवती.

[7] A. प्रत्यृचमितिः

[8] T. भवत्येव.

[9] A. तेतः स्वाहाकारान्तै. T. तत्स्वाहाकारान्तैः

[10] A. प्रदानर्थत्वान .

[11] A. मांत्रो.

[12] L. क्रिया.

[13] A. अनर्थकः

[14] A. प्रत्यृनग्रहणपिवेति.

नेत्युच्यते । सर्वाणि प्रयोजनवन्ति । तत्र[1] चतस्रग्रहणप्रयोजनं[2] तावत् एताश्चतस्र एव स्युः[3] । कथं न[4] भूयस्य इति । कथं पुनर्भूयस्यः[5] प्राप्नुवन्ति । वक्ष्यति त्वमर्यमा इति विवाहे चतुर्थीम्[6] । तत्र या चतुर्थी[6] सा पञ्चमी प्राप्ता । एवं प्राप्तपञ्चमीनिवृत्त्यर्थं चतस्रग्रहणम् । एवमेके । नेत्यपरे । असमानजातीयत्वात्[7] नेयं चतुर्थी[6] । 'तथा[8] उद्धाराय समर्थत्वात् । तस्मादुत्कर्षः । स्वस्थाने[9] च संख्यानिर्दिष्टार्थे तत्संख्ययोक्तं[10] बाधते । तद्यथा । वरुणप्रघासेषु प्रतिप्रस्थाता तृतीयश्चोद्यमानः उत्कर्षं करोति । न बाधनन् । एवमिहाप्येवं ब्रुवतः[11] । दाक्षायणे दोषः । द्वौ पौर्णमास्यां इति द्वितीयस्य तृतीयत्वं प्राप्तम्[12] । नेत्युच्यते । तस्य प्रयोजनं तत्रैवोक्तम् । तस्मात् चतस्रग्रहणं तदवस्थमेव[13] । चतस्रग्रहणं भूयसो[14] निवृत्त्यर्थमेव वक्ष्यति । समुच्चयमेक इति वचनात् अष्टावाहुतयः प्राप्नुवन्ति । तत्रापि[15] कथं चतस्र एव स्युः इत्यतो नियमः क्रियते । एवं सति

[1] T. ननु तत्र. A. तच्च.
[2] A. चतस्रग्रहणं प्रयोजनं.
[3] A. एत्र स्यु. L. T. एत्रास्य.
[4] A. कथं नं. T. L. कथं नु.
[5] A. कथं पुर्भूतयस्यः
[6] A. चतुथी.
[7] A. असमानजातीयत्वोत्.
[8] A. तत्था.
[9] तस्मादुत्कर्षस्वस्यते. A. तस्मादुत्कर्षस्वश्वस्यते.
[10] A. संख्यानिर्दिष्टार्थोत्संख्ययोक्तं. L. संख्यानिर्दिष्टार्थे संख्ययोक्तं.
[11] L. ब्रुवता.
[12] A. तृतीयं त्व प्राप्तम्.
[13] A. तदवस्थमेव:
[14] A. L. भूयसी.
[15] L. तथापि.

समुच्चयो नोपपद्यते इति । मन्त्रेषु समुच्चयमुपपादयन्ति । कथं प्रयोगः कर्तव्यः[1] । ऋगन्ते[2] व्याहृत्यन्ते च स्वाहाकारः । मन्त्राणां[3] समुच्चयो नोपपद्यते आहुत्यधिकारात्[4] । तेनाहुतीनामेव समुच्चयः कर्तव्यः न मन्त्राणाम् । तेनाष्टांवेवाहुतयो[5] भवन्ति । ननु च नियमोऽपार्थकः । इदमन्यन्नियमप्रयोजनम् । चतस्र एव कथं स्युः नाधिकाः स्युः । कथं वाधिकत्वं[6] प्राप्नोति[7] । आज्यभागयोर्विकल्पेन क्रिया प्राप्नोति । तत्र कथं पक्षेणापि तयोरक्रिया स्यात् इत्यतो नियमः क्रियते । नियमे सति दोषः । स्विष्टकृदपि[8] न प्राप्नोति । उच्यते[9] । भवतिं स्विष्टकृत् पुरस्ताद्ग्रहणात्[10] । पुरस्ताद्ग्रहणमत्र एवं कृतम् । एवं कथम्[11] । पुरस्तादयं नियमः स्यात् उपरिष्टादयं मा भूदिति । आज्यग्रहणं[12] किमर्थम् । द्रव्यनिर्देशार्थम् । उच्यते[13] । द्रव्यनिर्देशार्थं न कर्तव्यम्[14] । अनादिष्टद्रव्येषु आज्यमेव[15] दर्शयति[16] । आज्यशेषेण वानक्ति हृदयं[17] इति । तेनाज्यं

[1] L. omits कर्तव्यः
[2] A. ऋगते.
[3] A. मंत्राणी.
[4] L. आहुत्याधिकारात.
[5] A. L. तेनाष्टाहुतयो.
[6] A. कथं वा आधिकत्वं.
[7] A. प्राप्नोतिः
[8] A. स्विष्टदपि.
[9] A. उच्यतेः
[10] A. स्विष्टकृत त्पुरस्ताद्ग्रहणात.
[11] A. कयं.
[12] A. अज्यग्रहणं.
[13] A. उच्याते.
[14] All MSS. have कर्तव्यः
[15] A. L. आज्यमेक.
[16] A. दर्शयतिः
[17] A. हृदय.

प्रतीयते[1] । सर्वहोमेष्वन्यार्थमिवाज्यग्रहणं किमर्थम् । तर्ह्याज्यग्रहणं आज्यहोमधर्मप्राप्त्यर्थम्[2] । आज्यहोमे च सति कृताकृतं परिस्तरणं एतेषु यथा स्यादिति एतत्प्रयोजनम्[3] । व्याहृतिभिर्वेति[4] । व्याहृतिभिर्वा चतसृभिः होमः कर्तव्यः । कुत एतत् । यथा चतस्रो भवन्तीति परिभाषासामर्थ्यात् । व्याहृतिभिश्चेत्युक्त्वा पुरस्तात् व्याहृतय उपदिशन्ति[5] । भूः स्वाहा भुवः स्वाहा स्वः स्वाहा भूर्भुवः स्वः स्वाहेति । तत्र व्याहृतिग्रहणप्रयोजनं[6] एतत् । कथम् । यत्र व्याहृतिग्रहणं तत्र चतसृणां स्यादिति । तस्मादिह चतस्रो व्याहृतयः सिद्धाः ॥

चतसृभिः । चतसृणामेव हि सूत्रे व्याहृतिसंज्ञा कृता । व्याहृतिभिश्च भूः स्वाहेत्यादिभिः ॥ (४)

समुच्चयमेके ॥

एके[7] आचार्याः व्याहृतीनां[8] च पूर्वोक्तानां चाहुतीनां समुच्चयमिच्छन्ति । तत्राहुतीनां[9] समुच्चयो भवतीत्युक्तं पुरस्तात् ॥

एके आचार्याः ऋगाहुतीनां व्याहृत्याहुतीनां च समुच्चयमिच्छन्ति । तेनाष्टाहुतयः ॥ (९)

[1] A. प्रतीयतो.
[2] A. प्रात्प्त्यर्थं instead of प्राप्त्यर्थं.
[3] A. एतत्प्रयोजनं.
[4] A. व्याहृतिर्वा.
[5] A. उपदिशन्तिः
[6] A. व्याहृतिग्रहणाप्रयोजनं.
[7] Before this A. has समुच्चयमेके एके. L. समुच्चय
[8] A. याहृतीनां. The व् portion is not seen at all.
[9] L. तत्र व्याहृतीनां. A. तत्राहृतीनां.

नैके काश्चन ॥

एके[1] आचार्या न कांचन[2] आहुतिमिच्छन्ति । नैक इत्येवं वक्तव्यम् । कांचनग्रहणं[3] कस्मात्[4] । नैक[5] इत्येवमुच्यमाने समुच्चयविकल्पः स्यात् । प्रतिषेधविकल्पो न स्यात् । अतः कांचनग्रहणं[6] क्रियते । नैतदस्ति प्रयोजनम् । समुच्चयविकल्पस्य प्रागेव सिद्धत्वात् । तस्मान्नैक इत्येवं वक्तव्यम् । न कांचन[7] इति । नैतदस्ति । नैक इत्येवमुच्यमाने दोषः स्यात् । को दोषः । होमविकल्पः स्यात् न आहुतिविकल्पः । कः पुनर्विशेषो[8] होमस्याहुतीनां च । आहुतिभिर्होमा उपदिष्टाः । तासां यदि न स्यात् कर्मण आरम्भः[9] स्यात् । होमे प्रतिषिध्यमाने कथं[10] आहुतिप्रतिषेधः स्यात् । न होमप्रतिषेधः स्यात्[11] ॥

एके आचार्याः कामप्याहुतिं नेच्छन्ति । नैक इत्येव वक्तव्ये काश्चनग्रहणमृगाहुतीनां व्याहृत्याहुतीनां चायं प्रतिषेधो यथा स्यात् । किंशब्दस्य सर्वनामत्वात्

[1] Before this A. has ने केकीचन. L. नै के कांचनेति.

[2] A. कीचन.

[3] A. कीचनग्रहणं.

[4] A. कस्मत्.

[5] A. निके. What is written is कस्मन्निके.

[6] A. कीचचग्रहणं.

[7] A. कांचत.

[8] A. पुकःनर्विशेयो.

[9] A. कर्मणस्यारभः

[10] In all the MSS. after प्रतिषिध्यमाने and before कथं there is the following: नैकवर्णं (A. नैकवर्य) मारभ्यते न कांचन होमे प्रतिषिध्यमाने (A. प्रतिपिध्यमानें) नैकव्रर्णमारभ्यते न कांचन आसां यदि न स्यात् कर्मण आरंभः (A. स्यरभ) स्यात् ग्रहणं क्रियते.

[11] A. omits all the words after कथं. T. omits स्यात् and adds इति.

सर्वनाम्नाश्च प्रकृतपरामर्शत्वात्। अन्यास्त्वाहुतयो होतव्या इत्येवमर्थम्। तेनानादेशाहुतयः सिद्धाः ॥ (६)

## त्वमर्यमा भवसि यत् कनीनामिति विवाहे चतुर्थीम् ॥

अनयर्चा[1] विवाहे चतुर्थी[2] आहुतिर्वेदितव्या। अत्र संशयः। किं[3] पूर्वायाश्चतुर्थ्याः[4] स्थाने एव वा न वेति। आहोस्वित्[5] तस्या उत्कर्ष[6] इति। तत्रैके चतुर्थीमित्युपदेशात्[7] चतुर्थ्याः स्थाने[8] भवतीति। समानजातीयत्वात्। अन्ये[9] पुनः पूर्वायाश्चतुर्थ्या उत्कर्षमिच्छन्ति। किं कारणम्। असमानजातित्वात्[10]। न तत्र[11] चतुर्थीवत् प्रत्यक्षं काचित् चोदनोच्यते[12]। किञ्च सङ्ख्यानिर्दिष्टश्चार्थः पूर्वोक्तं[13] न बाधते। यत्र च संख्यानिर्देशे[14]

[1] L. has त्वमर्यमेति written twice before this. T. has त्वमर्यश्चतुर्थी-त्वमर्यमेति. In A. this portion is missing. T. has अनर्चाय instead of अनयर्चा.

[2] A. omits the portion thus far.

[3] A. कि.

[4] A. पूर्वायाश्चर्थ्याः

[5] L. अहोस्वित्.

[6] T. उत्कर्षाय.

[7] A. चतुथीमित्युपदेशात.

[8] A. स्थानै.

[9] L. अन्यः

[10] All MSS. have समानजातित्वात.

[11] A. तन्च.

[12] A. चतुर्थावत्पक्षंकीक्षित्वोच्यतेः L. चतुर्थीप्रत्यक्षकाद्क्षित्वोच्यते. T. चतुर्थीवत्का प्रत्यक्षकाद्क्षित्वोच्यते. The reading printed above is only a guess.

[13] A. पूर्वोक्त.

[14] A. सोख्यानिर्देशे.

पूर्वस्य बाधनामिच्छन्ति[1] तत्र यत्नान्तरं[2] आरभते। यथा[3] द्वितीयस्याहः स्थाने[4] महाव्रतमिति। यत्र पुनर्यत्नो नास्ति तत्र न बाधको भवति। यथा प्रतिप्रस्थाता[5] वाजिने तृतीय इति प्रतिप्रस्थाता चोद्यमान[6] आग्नीध्रस्य उत्कर्षाय भवति। नापनयाय[7]। एवमिहाप्येषा चतुर्थी[8] पूर्वोक्तायाश्चतुर्थ्या उत्कर्षाय भवति। तस्मात् पञ्चैता आहुतयो भवन्ति। एतस्मिन् पक्षे आग्नीध्रवत्। यथा तत्र आग्नीध्रश्चतुर्थ एवमिहाप्याहुतिः[9] ॥

अत्र संशयः। पूर्वस्या बाध उतोत्कर्ष इति। उत्कर्ष इति ब्रूमः। असमानजातित्वात्। समानजातेरेव हि बाधो विहितः। एष समानजातिधर्म इति तच्छब्दचोदितश्च समानजातिर्भवति। यथा अथ सामिधेन्यः। ताः सामिधेन्य इति। अत्र च तच्छब्दचोदितत्वात् न बाधः। अपि तूत्कर्षः। यथा 'प्रतिप्रस्थाता वाजिने तृतीयः' इत्यत्र आग्नीध्रस्योत्कर्षः तद्वदत्रापि। अपि च सङ्ख्यानिर्दिष्टो न पूर्वं बाधते। यत्र तु बाधते तत्र स्थानग्रहणं करोति। यथा तृतीयाहुतिस्थाने महाव्रतमिति। तस्मात् उत्कर्ष इति सिद्धम् ॥ (७)

इति प्रथमे चतुर्थी कण्डिका

---

[1] A. T. बाधनामिच्छन्ति.

[2] A. यत्नीतरं.

[3] L. तथा.

[4] A. स्थने.

[5] A. प्रतिप्रतिप्रतिस्थाता.

[6] All MSS. have चोद्यमाने.

[7] A. T. न यः न साय: L. त य न साय: The reading नापनयाय is only a conjecture.

[8] A. चतुथी.

[9] A. एवमिहाप्याहुतयः

कुलमग्रे परीक्षेत ये मातृतः पितृतश्चेति यथोक्तं पुरस्तात् ॥

अग्र इति[1] प्रथममित्यर्थः। कुलं परीक्ष्य प्रथमं पश्चाद्वरस्य ये गुणाः वध्वाश्च। सत्स्वप्युत्तरोत्तरगुणेषु कथं कुलमग्रं प्रधानं स्यादिति। एतच्च प्रयोजनं अग्रग्रहणस्य[2]। कथं पुनस्तत्परीक्ष्यं[3] कुलम्। तदुक्तं पुरस्तादिति[4]। अथ वरगुणा अभिधीयन्ते ॥

कुलशब्देनोभौ वंशौ महापातकादिरहिताविति सिद्धौ। तथापस्मारादिदोषरहिताविति। कुलमग्रे प्रथमं परीक्षेत। कथम्। ये मातृतः पितृतश्चेति यथोक्तं पुरस्तात्। 'ये मातृतः पितृतश्च दशपुरुषं समनुष्ठितविद्यातपोभ्यां पुण्यैश्च कर्मभिर्येषामुभयतो वा ब्राह्मण्यं निनयेयुः पितृतश्चैके' इति। अग्रेवचनं वधूवरगुणेभ्यः कुलमेव प्रधानं स्यात् इत्येवमर्थम्। अथ वरगुणमाह ॥ (१)

बुद्धिमते कन्यां प्रयच्छेत् ॥

तत्र[5] बुद्धिमत इति बुद्धिमत्तरायेत्यर्थः[6]। का[7] पुनर्बुद्धिः। यार्थदर्शिनी[8]। यो यः[9] शास्त्रवित् तद्वते। एवं वरगुणा[10] उक्ताः। कन्यागुणा वक्तव्याः ॥

[1] Before अग्र इति A. has कुलमग्रे पुरस्तात्. L. has कुलमग्र इति.

[2] A. T. अग्रग्रहण L. अग्रग्रहणम्.

[3] L. पुरस्तात्परीक्षं A. पुष्यनस्तत्परीक्षं.

[4] A. L. पुरस्ताच्चेति.

[5] Before तत्र A. has बुद्धिच्छेत. L. has बुद्धिमत इति. L. has तच्च instead of तत्र.

[6] L. बुद्धिमतिशयेत्यर्थः. A. बुद्धिमत्तवायेत्यर्थः

[7] L. किं.

[8] A. यार्थादर्शिनी.

[9] A. योर्योयः. L. T. योऽर्थः

[10] A. वत्तरगुणा.

अर्थदर्शिनी बुद्धिः । कोऽर्थः । यः शास्त्राविरुद्धः । तद्वते बुद्धिमते कन्यां प्रयच्छेत् । अथ कन्यागुणमाह ॥ (२)

**बुद्धिरूपशीललक्षणसम्पन्नामरोगामुपयच्छेत ॥**

बुद्धिर्व्याख्याता[1] । रूपमिति । रोचते यद्रूपम् । तत्र हि मनो रमते । तैः लक्षणैः[2] संपन्ना लक्षणसंपन्ना । तामुपयच्छेत[3] । तत्र तु लक्षणबहुत्वात् तस्य शास्त्रस्य दुरवगाहत्वात् तेन आचार्य उद्देशेन[4] स्वयमेव लक्षणोपायं शास्ति ॥

बुद्धिरूपशीललक्षणैर्युक्तां रोगवर्जितां कन्यामुपयच्छेत स्वीकुर्यात् । यत्र स्वमनो रमते तद्रूपम् । लक्षणानां दुरगाहत्वं मत्वा परीक्षान्तरमाह ॥ (३)

**दुर्विज्ञेयानि लक्षणानीति ॥**

तत्र[5] दुर्ज्ञेयत्वात् लक्षणोपायं शास्ति । कः पुनरसावुपायः ॥

लक्षणानि दुर्विज्ञेयानीति कृत्वा एवं परीक्षेत ॥ (४)

**अष्टौ पिण्डान् कृत्वा ऋतमग्रे प्रथमं जज्ञ ऋते सत्यं प्रतिष्ठितम् । यदियं कुमार्यभिजाता तदियमिह प्रतिपद्यताम् । यत् सत्यं तद्दृश्यताम् । इति पिण्डानभिमन्त्र्य कुमारीं ब्रूयात् एषामेकं गृहाणेति ॥**

[1] Before this A. has बुद्धिरूपलक्षणसंपन्नामुपयच्छेत. A. बुद्धिर्व्याख्याताः instead of बुद्धिर्व्याख्याता. L. does not quote even the Pratika.

[2] A. T. रमाते लक्षणैः L. रमातैः लक्षणैः

[3] L. नामुपायच्छेत.

[4] L. उद्देशात.

[5] Before this A. quotes the whole sūtra. L. has दुर्विज्ञेयानीति.

ऋतमग्र[1] इत्यनेन मन्त्रेण पिण्डानभिमन्त्र्य कुमारीं ब्रूयात्[2] एषामेकं ग्रहाणेति। अथ[3] पिण्डाधिकारे पुनः पिण्डग्रहणं किमर्थम्। कुमार्या[4] अभिमन्त्रणं माभूदिति। कः पुनः प्रसङ्गः। एकवाक्यनिर्देशात्। कुमार्याश्च द्वितीयानिर्देशात् प्रसज्येत[5]। तन्निवृत्त्यर्थं[6] पिण्डग्रहणं क्रियते[7]। अथ कुतस्ते पिण्डा भवन्तीति[8] उपरिष्टादन्वाचष्टे॥

क्षेत्रादिभ्योऽष्टभ्यो मृदमाहृत्याष्टौ पिण्डान् कृत्वा 'ऋतमग्रे' इत्यनेन मृत्पिण्डानभिमन्त्र्य कुमारीं ब्रूयात् एषामेकं गृहाणेति। पुनः पिण्डग्रहणं कुमार्या अभिमन्त्रणं मा भूत्। सापि हि द्वितीयानिर्दिष्टा॥ (५)

**क्षेत्राच्चेदुभयतः सस्याद्गृह्णीयादन्नवत्यस्याः प्रजा भविष्यतीति विद्यात्। गोष्ठात् पशुमती। वेदिपुरीषाद्ब्रह्मवर्चस्विनी। अविदासिनो ह्रदात् सर्वसम्पन्ना। देवनात्कितवी। चतुष्पथाद्द्विप्रव्राजिनी। इरिणादधन्या। श्मशानात् पतिघ्नी॥**

क्षेत्राच्चेदुभयतः सस्यात्[9] आहृत्य पिण्डं[10] गृह्णीयात्। अन्नवत्यस्याः प्रजा भविष्यतीति विद्यात्[11]। उभयतःसस्यादिति। एकस्मिन्[12] संवत्सरे

[1] Before this A. has अष्टौ पिण्डान् कृत्वा. L. has अष्टौ पिण्डान् कृत्वेति.
[2] A. ब्रयात.
[3] A. अर्थ पिडाधिकारे.
[4] A. L. कुर्यात्.
[5] A. प्रसज्योत.
[6] A. तन्निवृत्यर्थ.
[7] A. क्रियते:
[8] A. भवतीति.
[9] Before this A. has क्षेत्राविद्यात L. has क्षेत्राचेदुभयत इति.
[10] A. आहृत पिंडु.
[11] A has only प्रविद्य स after अन्नवत्यस्या:
[12] A. सस्यादिकत्यस्मिन्.

यत्रोभयं सस्यं निष्पद्यते तदुभयतःसस्यम् । तस्मात् क्षेत्रात्[1] । गोष्ठाच्चेदाहृतं[2] पिण्डं गृह्णीयात् पशुमत्यस्याः प्रजा भविष्यतीति विद्यात् । वेदिपुरीषाच्चेदाहृतं पिण्डं गृह्णीयात् ब्रह्मवर्चस्विन्यस्याः प्रजा भविष्यतीति विद्यात् । अविदासिनो ह्रदादाहृतं[3] पिण्डं गृह्णीयात् सर्वसंपन्नास्या.[4] प्रजा भविष्यतीति विद्यात् । देवनात् कितवी अस्याः[5] प्रजा भविष्यतीति विद्यात् । चतुष्पथाच्चेदाहृतं[6] पिण्डं गृह्णीयात् द्विप्रव्राजिनी[7] भवतीति विद्यात । प्रव्रजत्यन्यैः सह[8] तिष्ठतीत्यर्थः । इरिणाच्चेदाहृतं पिण्डं गृह्णीयात् अधन्या भवतीति विद्यात्[9] । उपरता यस्य ओषधयः[10] । शुष्का इत्यर्थः । तदिरिणम्[11] । तस्मादिरिणात् · श्मशानाच्चेदाहृतं पिण्डं[12] गृह्णीयात् पतिं हन्तीति विद्यात्[13] ॥

उभयतःसस्यात् क्षेत्रादाहृतं मृत्पिण्डं गृह्णीयात् चेत् अस्याः प्रजा अन्नवती भविष्यतीति विद्याम । एवमुत्तरत्रापि नेयम् । यदेकस्मिन् संवत्सरे

[1] A. निष्पद्यतेऽभयतः सस्यात् क्षेत्रात्. L. निष्पद्यते तदुभयतः सस्यात क्षेत्रात्.
[2] A. गोष्ठाच्चेदाहृतं.
[3] A. ह्रदादाहृते.
[4] A. सर्वसपन्नास्या:
[5] A. दोवनात्कितवास्याः
[6] A. चतुष्पथाचेदाहृते.
[7] A. विप्रव्राजिनी.
[8] A. प्रव्रजत्प्रन्मै: सह. L. प्रव्रजत्यन्यैः सा सह. T. विविधं प्रव्रजति अन्यैः सह.
[9] वियात missing in A.
[10] A. अस्या औपधयः L. अस्या ओषधयः
[11] A. तदिरिण.
[12] A. नमशानाचेदाहृत पिण्डं.
[13] After गृह्णीया and पतिं A has the following repeated :— दधन्या भवतीति उपरता अस्या औपधयः शुग्रा इत्यर्थः तदिरिणं तस्मादिरिणात । श्मशानाचेदाहृतपिंडं गृह्णीयात. It goes on as गृह्णीयात्पतिं L. has only अधन्या भवतीति repeated. A. omits इति विद्यात्.

द्धिः फलति तदुभयतःसस्यं क्षेत्रम्। अपवृत्ते कर्मणि या वेदिस्तस्याः पुरीषम्। अविदासिह्रदो नामाशोष्यं ह्रदम्। देवनं द्यूतस्थानम्। यत्रोप्तबीजं न प्ररोहति तदिरिणम्। द्वौ प्रव्रजतीति द्विप्रव्राजिनी। स्वैरिणीति यावत्। पतिं हन्तीति पतिघ्नी। अत्र प्रजास्तुतिनिन्दाद्वारेण सैव स्तुता निन्दिता चेति मन्तव्यम्। उत्तरैस्त्रिभिर्वाक्यैः सैव निन्द्यते॥ (६)

इति पञ्चमी खण्डिका

---

**अलंकृत्य कन्यामुदकपूर्वां दद्यादेष ब्राह्मो विवाहः। तस्यां जातो द्वादशावरान् द्वादश परान् पुनात्युभयतः। ऋत्विजे वितते कर्मणि दद्यादलंकृत्य स दैवो दशावरान् दश परान् पुनात्युभयतः। सह धर्मं चरतं इति प्राजापत्योऽष्टावरानष्ट परान् पुनात्युभयतः। गोमिथुनं दत्त्वोपयच्छेत स आर्षः सप्तावरान् सप्त परान् पुनात्युभयतः। मिथः समयं कृत्वोपयच्छेत स गान्धर्वः। धनेनोपतोष्योपयच्छेत स आसुरः। सुप्तानां प्रमत्तानां वापहरेत् स पैशाचः। हत्वा भित्त्वा च शीर्षाणि रुदतीं रुदद्भ्यो हरेत् स राक्षसः॥**

अलंकृत्य[1] कन्यामुदकपूर्वं दद्यादित्येवमादयोऽष्टौ विवाहा वेदितव्याः। तत्र पूर्वे चत्वारो विवाहाः पूर्वः पूर्वः प्रशस्ताः[2]। उत्तरे तु चत्वारः उत्तरोत्तरः पापीयांसः। अथ किं सर्वेषां सर्वे[3] भवन्ति आहोस्वित्[4] विनि-

[1] Here there is no Pratika. L. has स्पष्टोऽर्थः before this.

[2] A. प्रशस्तेः

[3] This word omitted in all MSS.

[4] L. अहोस्वित्.

योगोऽप्यस्ति[1] । केषांचित्[2] विनियोगः[3] । पूर्वौ तावत्[4] ब्राह्मणस्य । इतरेतरयोः[5] प्रतिग्रहाभावात् । ऋत्विगभावाच्च[6] । गान्धर्वः[7] क्षत्रियस्य राक्षसश्च । कथं ज्ञायते । युद्धसंयोगात् । गान्धर्वस्य च पुराणे दृष्टत्वात् । आसुरस्तु वैश्यस्य । कस्मात् । धनसंयोगात् । अन्ये त्रयोऽनियताः । वित्ताभावात् । तेन त्रयाणामपि ते भवन्ति ॥

कन्यामलङ्कृत्य उदकपूर्वां दद्यात् । एष विवाहो ब्राह्मसंज्ञो भवति । तस्यां कन्यायां जातो द्वादशावरानुत्पत्स्यमानान् द्वादश परान् पुनाति उभयतः । मातृतः पितृतश्चेत्यर्थः । एवमुत्तरत्रापि नेयम् । वितते कर्मणीति वैतानिके कर्मणीत्यर्थः । मिथःसमयकरणं नाम त्वं मम भार्या भव अहं तव पुरुषो भवामीत्येवंरूपो विवाहो गान्धर्वसंज्ञः । कन्यापित्रे धनदानेन यो विवाहः स आसुरसंज्ञः । सुप्तेभ्यः प्रमत्तेभ्योऽनवधानेभ्यः कन्यामपहृत्य यो विवाहः स पिशाचसंज्ञकः । युद्धं कृत्वा कन्यामपहृत्य यो विवाहः स राक्षससंज्ञकः । एवमेतेऽष्टौ विवाहाः । तत्र पूर्वेषु चतुर्षु पूर्वः पूर्वः प्रशस्तः । उत्तरेषु चतुर्षु उत्तरोत्तरः पापीयान् । तत्र पूर्वौ ब्राह्मणस्य । इतरयोः प्रतिग्रहाभावात् आर्त्विज्याभावाच्च । गान्धर्वः क्षत्रियस्य पुराणे दृष्टत्वात् । राक्षसश्च तस्यैव युद्धसंयोगात् । आसुरस्तु वैश्यस्य धनसंयोगात् । इतरे त्रयोऽनियताः ॥ (१)

इति षष्ठी खण्डिका

---

[1] Perhaps नियम would be a better word in both the places. See the word अनियत at the end of the commentary on this section.

[2] All MSS. read केचित्.

[3] See note 1 above.

[4] L. पूर्वो उक्तः तावत्.

[5] A. इतरतरयोः. L. omits this word.

[6] A. ऋत्विगभावाच.

[7] A. गीधर्वा.

अथ खलूच्चावचा जनपदधर्मा ग्रामधर्मांश्च । तान्विवाहे प्रतीयात् ।

अथशब्दो[1]ऽधिकारार्थः । इत उत्तरं यद्वक्ष्यामः तत् सर्वेषां वेदितव्यम् । खलुशब्दोऽपार्थकः । उच्चावचा इति नानाप्रकाराः । बहव इत्यर्थः । अथ खलु जनपदधर्मा इति वक्तव्ये उच्चावचग्रहणमपार्थकम् । नेत्युच्यते । उच्चावचग्रहणे[2]ऽक्रियमाणे सर्वे धर्मा ग्रामेषु जनपदेषु च ये शक्याः तेषां सर्वेषां समुच्चयः प्राप्नोति । स चानिष्टः[3] । तेनोच्चावचा[4] नानाप्रकारा एव क्रियेरन्निति । अत उच्चावचग्रहणम् । जनपदा इति च[5] अङ्गा वङ्गा[6] मगधाः कुरवो विदेहाः पाञ्चालाः[7] शूरसेना इत्येवमादयः । एतेषु च ये ग्रामाः तेषु जनपदेषु ग्रामेषु च ये धर्माः तान् विवाहे धर्मान् प्रतीयात् । जानीयादित्यर्थः । कुर्यादित्येतदुक्तं भवति । तानिति शक्यमकर्तुम् । कस्मात् । अधिकृतत्वात् तेषाम्[8] । नेत्युच्यते । ग्रामधर्मांश्च विवाहे प्रतीयादित्येवमुच्यमाने[9] न जनपदधर्माणां[10] ग्रामधर्माणां[11] च विधानं स्यादिति । कथं विधानार्थेन लिङ्गासंबन्धो[12] मा भूदिति । अतस्तानीत्युच्यते । किं सिद्धं भवति । अन्येऽपि धर्माः तानीत्यनेनाकृष्यन्ते । के

[1] Before this A. has अथ खलु. प्रतीयोगात. L. has अथ खल्विति.

[2] A. उच्चावग्रहणे.

[3] This word not in any MSS.

[4] A. तेनोच्चानवा.

[5] A. इतिश्च.

[6] A. अगा.

[7] A. पाचालाः

[8] L. only instead of तेषाम्. A. तेषी.

[9] A. प्रतीयादित्येनमुच्यमाने. L. प्रतीयादित्यनेनमुच्यमाने.

[10] A. omits न before जनपदधर्माणां.

[11] A. ग्रामधर्मोणा.

[12] A. लिगासबधो. L. लिङ्गात् संबन्धो.

पुनस्ते धर्माः । कुलधर्माश्च । तान् विवाहे प्रतीयादिति सिद्धं भवति । तेन ग्रामधर्माः[1] कुलधर्माश्च विवाहे प्रतीयादित्यर्थः साधितो भवति । विवाहे स्युः । कथं वा अकृत्स्ने विवाहे स्युः । उपनयनादुत्तरकाले[2] विहितत्वात् उपनयने न स्युः[3] । इत्यतो विवाहग्रहणं क्रियते । अथवा विवाहग्रहणं कुर्वन् तज्ज्ञापयति प्राक् चौळादीनामधिकारोऽनुवर्तत इति । किं पुनरधिकारानुवृत्तौ प्रयोजनमिति । कुलमग्रे परीक्षेतेति योऽयं विशेष उक्तः तस्य सर्वार्थता हविःकल्पिता भवति । तेन यस्य चौलं करिष्यन् भवति तस्य कुलमग्रे परीक्षेतेत्येतत् साधितं भवति । एवमुत्तरेषां साधारण्ये तत्प्रयोजनार्थं विवाहग्रहणम् ॥

अथशब्दोऽधिकारार्थः । यद्वक्ष्यते तद्विवाहे वेदितव्यमिति । खलुरनर्थकः । उच्चावचग्रहणं कथम । एते जनपदधर्मादयो नानाप्रकाराः क्रियेरन् नैकेन कर्त्रा समुच्चेरन्निति । जनपदधर्मा देशधर्माः । ग्रामशब्देन नगरमुच्यते । धर्मशब्दादेव द्वितीयानिर्देशे सति अन्वये सिद्धे तानितिवचनं कुलधर्मा अपि कार्या इत्येवमर्थम् । तान् तादृशानित्यर्थः । विवाहाधिकारे पुनर्विवाहग्रहणं कृत्स्ने विवाहे यथा स्युरित्येवमर्थम् । इतरथोपयमनकालादुत्तरकालं विहितत्वादुपयमने न स्युः । उपयमनं नाम कन्यायाः स्वीकरणम् । प्रतीयादिति कुर्यादित्यर्थः ॥ (१)

**यत्तु समानं तद्वक्ष्यामः ॥**

यद्वक्ष्यामः[4] तत्सर्वं समानं वेदितव्यम् । समानं तुल्यं अविसंवादि ।

[1] L. ग्रामाः instead of ग्रामधर्माः

[2] A. उपनयनादुत्तरकाल.

[3] A. उपनयेनेतस्युः

[4] A. has before this यत्तु समान तद्वक्ष्यामः L. does not give the pratika.

तदिदमनारभ्यं[1] सिद्धत्वात्। यथान्यानि कर्माणि उपदेशादेव सर्वत्र समानानि भवन्ति एवमपि सर्वत्र समानं भविष्यति[2]। ब्रवीति[3]। नियमार्थमिदमारभ्यते नान्यदिति। किं पुनः[4] तदन्यदिति। जनपद-धर्मत्वेन च यो धर्मः प्राप्नोति यश्च वक्ष्यमाणस्तयोर्विकल्पः स्यात्। स मा भूदिति कृत्वा निश्चयः क्रियते। न च भविष्यति विकल्पः। वक्ष्यमाण एव धर्मो भविष्यति। किं कारणम्। शास्त्रविहितत्वात्। नेत्युच्यते। जनपदधर्मा अपि शास्त्रविहिताः। तेन विकल्प उपपद्यते। तस्मान्नियमार्थमारब्धव्यम्। कः पुनरसौ धर्मो योऽनभिप्रेतो निवर्त्यते। यस्मात्तत्र लौकिकेषु[5] सद्य एव व्यवायो दृष्टः। शास्त्रेषु त्रिरात्रादि-ब्रह्मचर्यं चोपपद्यते। तत् कथं ब्रह्मचर्य एव नियमः[6] स्यात्। न व्यवाय इत्येतदिदं सूत्रमारभ्यते। अथवा यत्तु समानं तद्वक्ष्याम इत्यारभ्यते। अष्टौ विवाहा विहिताः। सर्वैरेतैः कर्मविशेषैः भवितव्यमिति प्राप्तमेव हि उपपन्ना संख्या भवति[7]। एवं प्राप्ते वक्ष्यमाणं तु[8] कर्म सर्वेषु समानमेव[9]

[1] र looks more like ए in A. After this word there are two letters before सिद्धत्वात्. The second is व्य. The first may be read ब्ध. These letters not wanted. The only possible word in between is कस्मात्. What is written is decidedly not this. What is written is a confusion of अनारभ्य and अनारब्धव्यं.

[2] वि looks more like नि in A.

[3] A. ब्रवीति.

[4] A. कि पुन:

[5] A. लोकेषु.

[6] A. L. एव repeated unnecessarily after नियमः

[7] L. भवन्ति.

[8] A. L. वक्ष्यमाणां.

[9] L. समानमेवं.

भवति । अथ संख्या किमर्था । दानोपायमात्रे संग्रहानुग्रहो द्रष्टव्यः । फलं[1] चैतद्वा प्रयोजनम्[2] ॥

किमर्थमिदम् । यथा अन्यान्युपदेशादेव सर्वत्र भवन्ति पार्वणादीनि तथेदमपि स्यात् । नियमार्थम् । तर्हि जनपदादिधर्माणां वक्ष्यमाणधर्माणां च विरोधे सति वक्ष्यमाणमेव धर्मं कुर्यात् । जनपदादिधर्ममिति यद्वक्ष्यामस्तत् सर्वत्र समानमेवेत्यर्थः । वैदेहेषु सद्य एव व्यवायो दृष्टः । गृह्ये तु ब्रह्मचारिणौ त्रिरात्रं इति ब्रह्मचर्यं विहितम् । तत्र गृह्योक्तमेव कुर्यात् न देशधर्ममिति सिद्धम् ॥ (२)

**पश्चादग्नेर्दृषदमश्मानं प्रतिष्ठाप्योत्तरपुरस्तादुदकुम्भं समन्वारब्धायां हुत्वा तिष्ठन् प्रत्यङ्मुखः प्राङ्मुख्या आसीनाया गृभ्णामि ते सौभगत्वाय हस्तं इत्यङ्गुष्ठमेव गृह्णीयाद्यदि कामयीत पुमांस एव मे पुत्रा जायेरन्निति ॥**

अग्नेः[3] पश्चात् दृषदमश्मानं प्रतिष्ठापयति । तत्राश्मग्रहणेन[4] कस्य ग्रहणं भवति । अश्मग्रहणेन[5] उभयोरपि प्रतिष्ठापनं[6] कर्तव्यम् । एवमेके । अन्ये पुनरश्मग्रहणमश्ममयीं दृषदमिति ब्रुवन्ति[7] । अस्मिन् पक्षे दृषद एव प्रतिष्ठापनं कर्तव्यं[8] प्राप्नोति । दृषत्पुत्रकस्यापि[9] तत्र प्रतिष्ठापनं भवति

[1] A. फल.

[2] After this L has लक्ष्मीनारायणार्पणमस्तु.

[3] Before this A. has पश्चादग्नेर्दृषदमश्मानं प्रतिष्ठाय पुत्रा जायेरन्निति. L. does not give even the pratika.

[4] A. तत्राश्मग्रहणोन.

[5] After this A. has the word पुत्रस्व; L. पुत्रस्य. Perhaps to read दृषदः पुत्रकस्य here.

[6] A. प्रतिष्ठापमं. In ति the mark above the line missing.

[7] A. ब्रवीति.

[8] A. कर्तव्य.

[9] A. दृषत्पुत्रकास्यापि.

मङ्गलार्थत्वात्[1] । यद्युभयोरपि कार्यो दृषत्पुत्रस्य प्रतिष्ठापनचिन्तायाः[2] किं प्रयोजनम् । यद्यश्मग्रहणेन दृषत्पुत्रो गृह्यते तत्र परिणीयाश्मानमारोहयतीति[3] दृषत्पुत्रेऽप्यारोहणं कर्तव्यम् । अथाश्ममयीं[4] दृषदमिति ये वर्णयन्ति तेषां दृषद्येवारोहणं[5] भवति । एतस्मिन् पक्षे अश्मग्रहणमपार्थकम् । कस्मात् । येन नाश्ममय्येव दृषद्भवतीति । नेत्युच्यते । अनश्ममय्यपि[6] विद्यते[7] । तन्निवृत्त्यर्थं विशेषग्रहणं क्रियते । आगमस्त्वयमेव[8] । उत्तरपुरस्तात् उदकुम्भं प्रतिष्ठाप्याग्नेः समन्वारब्धायाम्[9] । समन्वारब्धवत्यामित्यर्थः[10] । हुत्वा तिष्ठन् प्रत्यङ्मुखः[11] । तिष्ठद्ग्रहणं कुर्वन् ज्ञापयति आसीनेन होमः क्रियत इति । प्रत्यङ्मुखवचनं प्राङ्मुखतानिवृत्त्यर्थम्[12] । प्राङ्मुख्या आसीनायाः । प्राङ्-मुख्या इति प्राङ्मुखीयवचनं नियमार्थम् । तस्य नित्या इति कर्तृविहित-त्वात् प्रत्यङ्मुखीत्वनिवृत्त्यर्थम्[13] । आसीनाया इति कस्मात्[14] । कथमित उत्तरं कर्म तिष्ठन्त्याः स्यात्[15] । तत्राङ्गुष्ठग्रहणं[16] हस्तोपलक्षणार्थम् ।

[1] After this A has ब्रवीति extra.
[2] L. प्रतिष्ठापनं चितायाः
[3] A. परिणीयाश्मारोहयतीति.
[4] A. अथाश्ममयी.
[5] A. दृषद्व्येवारोहणं.
[6] L. अनश्ममय्यापि.
[7] A. विद्यत.
[8] After this word there is in A a letter which looks like ए.
[9] A. समान्वाब्धायी.
[10] A. समन्वारंभभवत्यामित्यर्थः. L. समन्वारम्भभंवत्यमित्यर्थः
[11] L. तिष्ठन्निति and omits प्रत्यङ्मुखः
[12] A. L., प्राक्चेष्टतानिवृत्यर्थम्.
[13] A. प्रत्यङ्मुखीनिवृत्यर्था. L. प्रत्यङ्मुखीनिवृत्यर्थम्.
[14] A. कस्मोत्.
[15] After this L. has लक्ष्मीनारायणार्पणमस्तु. A. has गृभ्णीमिते ह्णीयादिति किं वाक्यशेषः
[16] A. तत्रीगुष्ठग्रहणं.

अङ्गुष्ठे हस्तं गृह्णीयात् अनेन कामेन । यदि कामयेत पुमांस एव मे पुत्रा जायेरन्निति[1] । अत्र तु[2] पुमांसग्रहणं अपार्थकं[3] पुत्रशब्देनैव सिद्धत्वात् । नेत्युच्यते । पुत्रशब्दोऽयमुभयत्र दृष्टः । पुंसि स्त्रियां च । लोके वक्तारो भवन्ति । एहि पुत्रेति दुहितरम्[4] । यथा च मेधातिथिनोक्तं[5] दुहितरमङ्क उपविश्य पुत्र कस्ते जामातेति[6] । तेनैवं दृष्टत्वात् विशेषणमुपपद्यते । तस्मात् विशेषेण ग्रहणं[7] क्रियते । पुमांसः पुत्रा इति ॥

अग्निप्रतिष्ठापनोत्तरकालं पश्चादग्नेर्दृषदमश्मानं प्रतिष्ठाप्य उत्तरपूर्वदेशे उदकुम्भं प्रतिष्ठापयेत् । तत आज्यस्य बर्हिषि सादनान्तं कृत्वा समन्वारब्धायां वध्वां इध्माभ्यादानान्तं कृत्वा ततः पूर्वोक्ता आज्याहुतीर्हुत्वा तिष्ठन् प्रत्यङ्मुखः प्राङ्मुख्या आसीनाया अङ्गुष्ठमेव गृह्णीयात् गृह्णामीत्युक्त्वा पुत्रकामश्चेत् । मन्त्रस्तूत्तरयोरपि हस्तग्रहणयोर्भवत्येवायम् । दृषत् प्रसिद्धा । अश्मा तत्पुत्रकः । तत्रोभयोः प्रतिष्ठापनं सिद्धम् । एवं चेत् दोषः । अश्मानमारोहयति इत्यत्र पुत्रकारोहणं स्यात् । तर्हि अश्मग्रहणं तस्य विशेषणं स्यात् दृषदमश्मानमिति । अश्ममयीमित्यर्थः । मृन्मय्यपि हि लोके दृषद्विद्यते । तर्हि पुत्रकप्रतिष्ठापनं न स्यात् । न । स्यादेव मङ्गलार्थत्वात् । दक्षिणतः पत्न्युपविशेत् । उत्तरतः पतिः इति शास्त्रान्तरे दृष्टम् । स्रुवेण होमः साधनान्तरानुपदेशात् । एवम्भूतो व्यक्तहोमेत्यनेनैवावस्थाने सिद्धे तिष्ठन् समिधमादध्यात् इत्यत्र तिष्ठद्ग्रहणं कथम् । अन्यत्रासीनस्य कर्माणि स्युरित्येवमर्थम् । ततोऽत्रासीनप्राप्तौ तन्निवृत्यर्थं तिष्ठद्ग्रहणम् । प्रत्यङ्मुख इति प्राङ्मुखत्वनिवृत्त्यर्थम् । तस्य नित्याः प्राञ्चश्चेष्टाः इत्यनेन

[1] A. has only यदिकामयेत पुमांसरन्निति.

[2] L. omits तु.

[3] A. अनर्थकं.

[4] A. दुहितर. In हि the mark above the line missing.

[5] A. मधातिथितोक्तं.

[6] A. L. जातेति.

[7] A. विशेषग्रहणं.

प्राङ्मुखत्वे सिद्धे प्राङ्मुख्या आसीनाया इति वचनं प्रत्यङ्मुखाधिकारनिवृत्यर्थम्। आसीनाया इत्येतत् कथम्। इत उत्तरं वध्वा विहितं कर्म तिष्ठन्त्या स्यादित्येवमर्थम्। उत्तानेनोत्तानं पाणिं गृह्णीयात् नीचेन चोत्तानं इति शाखान्तरे दृष्टम्। पुत्रशब्दः पुंसि स्त्रियाञ्च स्मृतौ दृष्टः।

अकृता वा कृता वापि यं विन्देत् सदृशात् सुतम्।
पौत्री मातामहस्तेन दद्यात् पिण्डं हरेद्धनम्॥

इति। दौहित्रेण मातामहः पौत्री भवति इत्यर्थः। लोके च दुहितरि पुत्रशब्दं प्रयुञ्जाना दृश्यन्ते एहि पुत्र इति। मन्त्रे च दृश्यते पुमांस्ते पुत्रो जायतां इति। तस्मात् पुमांसः पुत्रा इति विशेषणम्। अथवा

पुन्नाम्नो नरकाद्यस्मात् पितरं त्रायते सुतः।
तस्मात् पुत्र इति प्रोक्तः पूर्वमेव स्वयम्भुवा॥

इति। एवंविधः स पुत्रो जायेत न प्रथमप्रकृतिमात्रं इत्येवमर्थमुभयोर्ग्रहणम्॥ (३)

**अङ्गुलीरेव स्त्रीकामः॥**

अत्रापि[1] अंगुलीषु हस्तं गृह्णाति[2] स्त्रीकामश्चेत्। हस्तग्रहणेन प्रज्ञाप्यमाने मन्त्रस्याधिकारो भवतीति[3] प्रज्ञापितं भवति॥

एवकारोऽङ्गुष्ठनिवृत्यर्थः। स्त्रीकामो दुहितृकाम इत्यर्थः॥ (४)

**रोमान्ते हस्तं साङ्गुष्ठमुभयकामः॥**

पुत्रकामः[4] स्त्रीकामश्च द्वे[5]॥

[1] Before this A. has अंगगुलीरेव स्त्रीकामः. L. has अङ्गुलीरेवेति.

[2] A. गृह्णीति.

[3] A. L. भवति.

[4] Before this A. has रौमी ते हस्तं कामः L. has रोमान्त इति. A. reads पुत्रकामा.

[5] L. स्त्रीकामश्चेति द्वे.

उभयकामः पुत्रदुहितृकाम' अङ्गुष्टाङ्गुलीभिः सह हस्तं गृह्णीयात्॥ (९)

**प्रदक्षिणमग्निमुदकुम्भं च त्रिः परिणयन् जपति—अमोहमस्मि सा त्वं सा त्वमस्यमोहं द्यौरहं पृथिवी त्वं सामाहमृक् त्वं तावेह विवहावहै प्रजां प्रजनयावहै संप्रियौ रोचिष्णू सुमनस्यमानौ जीवेव शरदः शतं इति ॥**

अमोहमस्मीत्येतं मन्त्रम्[1]। उदकुम्भग्रहणं[2] शक्यमकर्तु यज्ञपात्रत्वात्[3]। अक्रियमाणे हि दोष उपपद्यते। अन्येषां यज्ञपात्राणां बहिःकरणं प्राप्नोति[4]। तत्रैके एवमिच्छन्ति। अन्येषां त्विदं प्रयोजनम्। कथम्। विवाहं प्रति यद्विशिष्टमात्रं तस्य बहिःकरणं[5] यथा स्यादिति। किं पुनस्तत्। दृषत्[6]। त्रिः परिणयन नयतीति विचारयिष्यामः। किं त्रिर्जपति। परिणयन्निति। आहोस्वित्[7] परिणयन् जपतीति। किञ्चातः। यदेताः त्रिर्जपति परिणयन्नित्येवं करोति त्रिर्जपः[8] सकृत् परिणयनं[9] प्राप्नोति। अथ चेत्[10] परिणयन् त्रिर्जपतीति। एवं त्रिः परिणयनम्[11]। एवमपि सकृन्मन्त्रः प्राप्नोति। उभयथा च दोषः। एवं तर्हि कथमस्तु त्रिः

[1] A. has प्रदक्षिणमोह etc. The reading should be प्रदक्षिणमिति। अमोह etc. L. omits the whole of it and has instead प्रदक्षिणमग्निमिति.
[2] Before this, L. has प्रदक्षिणमग्निमिति. A. reads उदकुम्भग्रहणम्.
[3] A. यज्ञापात्रत्वात.
[4] A. प्राप्नोतिः
[5] A. and L. विवाहे प्रतिपद्विशिष्टमात्रान्तस्य हविः करणं.
[6] A. L., दृषदं.
[7] L. अहोस्वित्.
[8] L. त्रिजपः
[9] A., L. परिणयं.
[10] L. omits अथ चेत्.
[11] A. परिणयन.

परिणयनं[1] त्रिश्च जपः। कथमेतत् गम्यते। अनेकं तावत् परिणयनं दर्शयति। परिणीय परिणीय[2] इति। यावच्च परिणयनं तावत् जपतीति सिद्धं भवतीति[3]। तस्मात् त्रिश्च परिणयति त्रिश्च जपतीत्येतत् सिद्धम्। कथम्। परिणयनाङ्गत्वाज्जपस्य। तेनात्रापि[4] यावत् प्रदक्षिणं तावज्जपति ॥

अग्निमुदकुम्भं त्रिः प्रदक्षिणं वधूः स्त्रीः परिणयन् जपति—अमोहमस्मीति। उदकुम्भग्रहणमन्येषां यज्ञपात्राणां बहिःकरणार्थमित्येके। अन्ये तु विवाहे यदन्यद्दृष्टं पात्रं अश्मा तस्यैव बहिःकरणार्थमिति। त्रिर्ग्रहणं परिणयनेन सम्बध्यते उत जपेन। यदि पूर्वेण तर्हि सकृज्जपः स्यात्। अथ जपेन तर्हि सकृत् परिणीतिः। पूर्वेणेति ब्रूमः। कुतः परिणीय परिणीयेति तस्य बहुत्वं दर्शितम्। जपश्च परिणयाङ्गमिति कृत्वा यावत् परिणयनमावर्तते ॥ (६)

**परिणीय परिणीयाश्मानमारोहयति।**

**इममश्मानमारोहाश्मेव त्वं स्थिरा भव।**
**सहस्व पृतनायतोऽभितिष्ठ पृतन्यतः ॥**

**इति ॥**

परिणीयेत्येतेन[5] मन्त्रेण यत्रावरोहणं[6] भवति। तदुक्तं प्राक्। वीप्साग्रहणं यावत् परिणयनं तावत् यथा स्यादिति ॥

[1] A. परिणय L. परिणयं.

[2] L. only one परिणीय.

[3] D. भवति.

[4] A. नात्रापि. L. मात्रापि.

[5] A. परिणीणरोहेत्येतेन. There is no pratika here.

[6] A. यत्रावरोहणी.

वीप्सावचनं सर्वपरिणयनेष्वश्मानमारोहणं कारयितव्यमित्येतदर्थम। अथास्य कर्मणः कः कर्ता। आचार्यः। कुतः। वक्ष्यति। 'शिरसी उदकुम्भेनावसिच्य' इति। स्वयंकर्तृत्वे सति अवसेचनं कर्तुं न शक्यते। तदसत। वर एव कर्त्ता। आचार्येण ह्ययं विसृष्टो विवाहं करोति। उदकुम्भग्रहणन्तु तत्रस्थमुदकुम्भं लक्षयति॥ (७)

## वध्वञ्जलावुपस्तीर्य भ्राता भ्रातृस्थानो वा द्विर्लाजानावपति॥

वध्वा[1] अञ्जलिः वध्वञ्जलिः[2]। वध्वञ्जलिः इत्येवं प्राप्ते वध्वोऽञ्जलाविति[3] पठ्यते। तत्रायमपपाठो[4] द्रष्टव्यः। छान्दसो वा निर्देशः[5]। वध्वः अञ्जलाविति[6] वा अलुक्समासेन[7] वा पाठो द्रष्टव्यः। उपस्तीर्याभिघार्येत्यर्थः। भ्राता[8] भ्रातृस्थानः। मातुलपुत्रः पितृव्यपुत्रो वा भ्रातृस्थान[9] उच्यते। भ्रातुरभावे भ्रातृस्थानो[10] भवति।

ततो वध्वञ्जलौ उपस्तीर्य वध्वा भ्रात्रादिर्द्विर्लाजानावपति। वरो जामदग्न्यश्चेत्रिः। ततः शेषं प्रत्यभिधार्य अवदानं च प्रत्यभिधारयति। एवमवदायावदाय त्रिभिर्मन्त्रैर्जुहोति। भ्रातृस्थानः पितृव्यपुत्रो मातुलपुत्रश्च॥ (८)

[1] Before this A. has वध्वाञ्जलावुपस्तीर्य भ्राता। अविच्छिन्दत्यंजलीं स्रुचेव जुहुयात्. L. has वध्वञ्जलाविति.

[2] L. वध्वाञ्जलिः

[3] A. वध्वोजलाविति.

[4] A. has an avagraha S mark between म and प.

[5] L. निदेशः

[6] L. वध्वा ञ्जलाविति.

[7] A. अलुक्समासेम.

[8] L. भ्रातेति.

[9] L. भ्रातृस्थाने.

[10] L. भ्रातुःस्थानो.

त्रिर्जामदग्न्यानाम् ॥

यदि जामदग्न्यो वरो भवति तदा त्रिः लाजानावपति ॥

पञ्चावत्तिनामित्यर्थः ॥ (९)

प्रत्यभिघार्य हविः ॥

तत्र हविश्शब्दं केचिदवदाने कल्पयन्ति । केचित् शेषे कल्पयन्ति । तत्र शेषे उपपद्यते नावदाने । कुतः । दर्शनात् । किं पुनस्तद्दर्शयति[1] । स्विष्टकृदिति वक्ष्यति । नात्र हवींषि प्रत्यभिघारयति[2] । तत्र हविश्शब्दो वर्तते । तेन[3] शेषस्य प्रथममभिघारणं भवति । पश्चादवदानस्य ॥

हविःशब्दः शेषे वर्तते । यथा नात्र हवींषीति ॥ (१०)

अवत्तञ्च ॥

प्रत्यभिघार्य । अवत्तमवदानमित्युच्यते[4] ॥

अवदानमित्यर्थः ॥ (११)

एषोऽवदानधर्मः ॥

[1] A. and L. have after this तमिति extra.

[2] A. प्रत्याभिघारयति.

[3] L. only न instead of तेन.

[4] L. has after this श्रीलक्ष्मीनारायणार्पणमस्तु.

तत्र अवदानधर्ममुपजीवन् आचार्य इमां परिभाषामतिसृष्टवान एषोऽवदानधर्म इति। अवदानेन[1] कथमयं धर्मः स्यादिति। कुतः। यथा मध्यात् पूर्वार्धाच्च हविषोऽवद्यति। अवदानसंपदा जुहुयादिति च। अथाभिघारणप्रत्यभिघारणे कः करोति। भ्राता करोति। कस्मात्। अधिकृतत्वात्। समानकर्तृवचननिर्देशात्। नेत्युच्यते। यदि हि[2] भ्राता कर्ता स्यात् भ्रातरमधिकृत्य[3] उपस्तरणं चोदयेत्[4]। यस्मादुत्तरकाले[5] भ्राता चोद्यते तस्मादुपस्तरणस्य भ्राता न भवति कर्ता[6]। एवं तर्हि आचार्यः कर्ता। असावपि नोपपद्यते कर्ता[7]। कस्मात्। आचार्येणासौ[8] विसर्जितः। एवं तर्हि वर एव कर्तास्तु। वरस्यापि कर्तृत्वं नोपपद्यते[9]। यस्मादुपरिष्टादन्यं कर्तारं दर्शयति उदकुम्भेनावसिच्येति। स्वयंकर्तृकत्वे[10] सति अवसेचनं न शक्यते[11] कर्तुम्। नेत्युच्यते[12]। तत्रोदकुम्भशब्दः कुम्भस्थे उदके वर्तते। तेन तत्रस्थेनोदकेनावसेचनं कर्तव्यम्[13]। तस्मात् वर एव कर्ता भवतीत्येतत् सिद्धम्॥

[1] L. अवदानेनोऽस्य.
[2] A. यदि ह. L. यदि तु.
[3] L. भ्रातरसमधिकृत्य.
[4] L. चोदये.
[5] L. यस्मादुत्तरकालं.
[6] L. कः extra between भवति and कर्ता.
[7] A. कर्त.
[8] A. आचार्येणास्मैः
[9] A. नोपपद्येते.
[10] A. स्वयंकर्तृत्वे.
[11] A. शस्यते.
[12] A. नित्युच्यते.
[13] A. तत्रस्थोदकेनावस्यचनं तव्यं.

यत्र यत्रावदानमस्ति तत्र तत्रैष धर्मो भवतीत्यर्थः । मध्यात् पूर्वार्धाच्च हविषोऽवद्यतीत्यादौ । उपस्तरणाभिघारणे कः करोति । भ्राता । कुतः । समानकर्तृत्वनिर्देशात् । तदयुक्तम् । यदि ह्यत्र भ्राताऽभिप्रेतः स्यात् वध्वञ्जलौ भ्रातोपस्तीर्येत्येवावक्ष्यत् । तस्माद्वर एव करोति । यत्तूक्तं समानकर्तृत्वनिर्देशादिति तत्र ब्रूमः । असमानकर्तृकत्वेऽपि हि क्त्वाप्रत्ययो दृश्यते । यथा 'आज्याहुतिं हुत्वा मुख्यं धनं दद्यात्' इति होमे ब्रह्मा कर्ता । दाने यजमानः । इत्यादिषु पूर्वकालतामात्रमेव विवक्षितम् । तद्वदत्रापि ॥ (१२)

**अर्यमणं नु देवं कन्या अग्निमयक्षत स इमां देवो अर्यमा प्रेतो मुञ्चातु नामुतः स्वाहा । वरुणं नु देवं कन्या अग्निमयक्षत स इमां देवो वरुणः प्रेतो मुञ्चातु नामुतः स्वाहा । पूषणं नु देवं कन्या अग्निमयक्षत स इमां देवः पूषा प्रेतो मुञ्चातु नामुतः स्वाहेत्यविच्छिन्दत्यञ्जलिं स्रुचेव जुहुयात् ॥**

अर्यमणं[1] नु देवमित्येतैर्मन्त्रैः लाजान् जुहोति । कथं जुहोति[2] । अविच्छिन्दत्यञ्जलिं[3] स्रुचेव जुहुयात्[4] । अथ को जुहोति । वधूः । कथं[5] गम्यते । अविच्छिन्दतीति निर्देशात् । अथ मन्त्राः कस्य भवन्ति । तत्रैके वध्वा एवेच्छन्ति[6] । कस्मात् । सा जुहोति । मन्त्रलिङ्गदर्शनाच्च कन्या अग्निमयक्षतेति । नेत्युच्यते । वध्वा मन्त्रा न भवन्ति । कुतः । अनधिकारात् । न स्त्री मन्त्रैरधिक्रियते[7] । अधिक्रियते इति ब्रूमः । कथम् ।

[1] There is no pratika here in A. or L.

[2] A. जुहाति.

[3] A. अविच्छिदत्यञ्जलि.

[4] L. जुहुयादिति.

[5] A. अथ.

[6] A. एवेच्छसि.

[7] L. स्त्रीरधिक्रियते. A. स्त्रीरधिक्रियति.

यथा पत्नीवाचनादिषु तत्र वचनात् । इह तु सन्दिग्धत्वात् वरस्यैव मन्त्रा भवन्ति प्राधान्यात् । यच्चोक्तं लिङ्गदर्शनादिति तत् स्वलिङ्गं नोपपद्यते । नासौ कन्यामभिदधाति । अन्याः कन्या अभिधीयन्ते । तेन वरस्यैते मन्त्रा भवन्तीति । लिङ्गदर्शनाच्च पश्यामो यथा वरस्यैते मन्त्रा भवन्तीति । किं तर्हि दर्शनम् । एतन्मन्त्रनिर्देशः । स इमां देवो वरुण इति । यदि वध्वा मन्त्रा भवन्तीति स इमां देव इति लिङ्गदर्शनं नोपपद्यते । तस्मात् वरस्यैते मन्त्रा भवन्तीत्येतत् सिद्धम् ॥

को जुहोति । वधूः । कुतः । अविच्छिन्दत्यञ्जलिमिति स्त्रीलिङ्गनिर्देशात् । कस्यैते मन्त्राः । वध्वाः । कुतः । सा हि जुहोति । मन्त्रलिङ्गात् कन्या अग्निमयक्षतेति । तदसत् । न हि स्त्रीणां मन्त्रेष्वधिकारोऽस्ति । ननु कथं पत्नीवाचने । तत्र वचनमस्ति । अत्र तु सन्दिग्धम् । तस्मात् वरस्य मन्त्राः । मन्त्रलिङ्गाच्च । स इमां देव इति हि परोक्षनिर्देशः । यदि हि वध्वाः स्युः स इमां देव इति न स्यात् । यत्तूक्तं सा हि जुहोतीति तत्र ब्रूमः । अन्यस्यापि मन्त्रो दृश्यते । अध्वर्युर्जुहोति । होता वषट्करोति । यत्तूक्तं मन्त्रलिङ्गादिति तत्र ब्रूमः । न ह्यत्रेयं कन्याभिधीयते । अन्या एव तु कन्याः । यदीयमभिधीयते बहुवचनं नोपपद्यते । तथाभूतश्च प्रत्ययः । तस्मात् वरस्येति सिद्धम् ॥ (१३)

अपरिणीय शूर्पपुटेनाभ्यात्मं तूष्णीं चतुर्थम् ॥

चोदितक्रयः प्राप्तः[1] । चोदनासामर्थ्यात् । अश्मारोहणस्य व्यवधानोपदेशात्[2] । तस्मादव्यवहितानां प्रयोगः प्राप्तः । तेन व्यवधानप्रयोगदर्शनार्थं अयमेव परिणयनग्रहणं कल्पयन्ति । तूष्णीं परिणीय भवन्ति । एतत् सिद्धं भवति । एवमपरिणीयग्रहणं कल्पयन्ति । तूष्णीं ग्रहणं तूष्णीं होमधर्म-

[1] A. शप्तः instead of प्राप्तः

[2] A., L. व्यवधान उपदेशात्.

प्राप्त्यर्थम् । चतुर्थग्रहणं परिसंख्यानार्थम् । शेषात् स्विष्टकृत् इति स्विष्टकृन्निवृत्त्यर्थं चतुर्थग्रहणम् । एवमपरे कल्पयन्ति । अस्यार्थ एवं वर्णयतां[1] त्रीण्येव परिणयनानि भवन्ति । त्रिः परिणयं जपतीति चोदनासामर्थ्यात् । अयमेव चागमः । एवमनेकार्थविचारणायामुत्तम आगमपक्षो वेदितव्यः[2] ॥

अप्राप्तनिषेधः किमर्थः । चतुर्थहोमं कृत्वा कथममन्त्रकं परिणयनं स्यादित्येवमर्थमित्येके । अन्ये तु त्रीणि परिणयनान्यानन्तर्येणोक्तानि । तत्र त्रयो होमाः । तत्र पूर्वं पूर्वं परिणयनं कृत्वा पश्चात् होमः स्यादिति ज्ञापयितुमिति । शूर्पपुटः कोणः । तूष्णींवचनं प्रजापतिज्ञापनार्थम् । चतुर्थग्रहणं कथम् । एतस्य द्रव्यस्य स्विष्टकृतं न स्यात् । स एव च कर्ता यथा स्यादिति । तेन वधूर्जुहोति ॥ (१४)

**ओप्योप्य हैके लाजान् परिणयन्ति तथोत्तमे आहुती न सन्निपततः ॥**

एके आचार्या ओप्योप्य लाजान् परिणयनमिच्छन्ति । हकारोऽभिमतपक्षज्ञापनार्थः । अयमस्याभिमतः पक्ष आचार्यस्य । द्वितीयोपदेशात् दुर्बलत्वं मा भूत् । तुल्यबलत्वे विकल्पः सिद्धो भवति । तथोत्तमे आहुती न संनिपततः[3] । तथा सति क्रियायामुत्तमयोराहुत्योः सन्निपातो न भवति ।

[1] A. एवं तु वर्णयतां.

[2] Here L. has श्रीलक्ष्मीनारायणाय नमः ।

वेदार्थस्य प्रकाशेन तमो हार्दं निवारयन् ।
पुमर्थांश्चतुरो देयाद्विद्यातीर्थमहेश्वरः ॥

[3] Devasvāmin and Haradatta takes this part as a separate sūtra and all MSS. read so. But since the sūtra numbering follows the Bibliotheca Indica Edition, the entire sūtra is printed as one.

यद्येवं वचनमपार्थकम् । नैवोत्तमयोराहुत्योः सन्निपातोऽस्ति । तच्चैके[1] प्रशंसायां इमां मन्यन्ते । यस्मादुत्तमयोराहुत्योः सन्निपातो न भवति तस्मादयं पक्षः कर्तव्य इति । अन्ये पुनर्निन्दां मन्यन्ते । तेन नायं पक्षः कर्तव्य इति । तदिदमुभयं नोपपद्यते[2] । किमर्थं तर्हीदमारभ्यते । तथा कर्तव्यं परिणयनं यथोत्तमयोराहुत्योः सन्निपातो न भवति । कथं वा प्राप्नोति[3] । इह प्रागुक्तं अपरिणीयेति । तदन्यार्थम् । कृतं सत्[4] इह दोषमुत्पादयति । तत्[5] को दोषः । परिणयनमकृत्वा चतुर्थो होमः कर्तव्यः ॥

अभिमतार्थज्ञापनार्थो हशब्दः । एके लाजानोप्योप्य पश्चात्परिणयन्ति । किमिति । तथा सत्युत्तमे आहुती न संनिपतत इति कृत्वा । पूर्वस्मिंस्तु पक्षे उत्तमे आहुती संनिपततः । कोऽयं संनिपातो नाम । यदि पूर्वाहुतिशिरसि प्रक्षेपः । न तर्हि क्वचिदप्यसाविष्यते । किं पुनः पूर्वस्मिन्पक्षे । अथानन्तरम् । न तर्ह्यसौ दोषः । पार्वणादौ दृष्टत्वात् । तस्मादयमर्थः । यथोत्तमे आहुती न संनिपततस्तथा कर्तव्यम् । उत्तमयोराहुत्योर्मध्ये परिणयनं कर्तव्यमित्यर्थः । कथं वा न स्यात् । अपरिणीय शूर्पपुटेनाभ्यात्ममिति । अन्यार्थं कृतमपीह मध्ये परिणयनं निवर्तयेत् । अथवा पूर्वस्मिन्पक्षे उत्तमे संनिपततः । अत्र तु न संनिपतत इति वदन्नपरिणीयवचनं चतुर्थपरिणयनार्थमित्यस्मिन्नपि पक्षे पूर्वं परिणयनं कृत्वा पश्चाद्धोमो न चानन्तर्येण होम इति ज्ञापयति । यदि त्वानन्तर्येण होमः स्यात्सर्वासामेव संनिपातादुत्तमयोराहुत्योः पूर्वस्मिन्पक्षे संनिपात इति नोपपद्यते ॥ (१९)

अथास्यै शिखे विमुञ्चति यदि कृते भवतः ॥

[1] L. तत्रैके.

[2] A. नत्विदमुतयत्रौपपद्यते. L. ननु इदमुभयं नोपपद्यते.

[3] A. कथं वा न प्राप्नोति.

[4] A. तदल्पार्थं कृतं सन्. L. तदद्रव्यार्थं कृतं सन्त.

[5] L. omits तत्. A has only त् instead of तत्

अथशब्दः अनन्तरार्थः[1] । एतस्मिन्नन्तराले स्विष्टकृन्मा भूदिति । अस्यै इति किमर्थम् । अथ शिखे विमुञ्चतीत्येवमुच्यमाने उभयोः शिखाविमोकः स्यादिति स माभूदिति अस्यै इत्युच्यते[2] । यदि कृते भवतः । यदि जनपदधर्मत्वेन[3] वा[4] ग्रामधर्मत्वेन वा[4] कुलधर्मत्वेन वा कृते भवतः । अथ विमोको भवति ॥

कीदृशे पुनः शिखे ॥

अथशब्द इदानीं स्विष्टकृन्निवृत्त्यर्थः । अस्यै इति वरस्य निवृत्त्यर्थः । यदीत्यनित्ये । देशधर्मादिना यदि कृते भवतः ॥ (१६)

के कृते भवत इत्याह ॥

**ऊर्णास्तुके केशपक्षयोर्बद्धे भवतः प्र त्वा मुञ्चामि वरुणस्य पाशात् इति ॥**

तयोर्विमोको भवति । प्र त्वा मुञ्चामीत्येताभ्यां ऋग्भ्यां दक्षिणे पूर्वया ॥

प्र त्वा मुञ्चामीति दक्षिणां शिखां विमुञ्चति ॥ (१७)

**उत्तरामुत्तरया ॥**

उत्तरे पक्षे उत्तरया ॥

प्रेतो मुञ्चामि इत्युत्तरां शिखां विमुञ्चति । वरस्य तु शिखे तूष्णीं विमुञ्चति ॥ (१८)

[1] A. अनन्तरायामर्थः

[2] A., L. इत्युच्यमाने.

[3] A. जवयदधर्मत्वेन.

[4] L. omits वा in both cases.

**अथैनामपराजितायां दिशि सप्तपदान्यभ्युत्क्रामयति इषे एकपदी ऊर्जे द्विपदी रायस्पोषाय त्रिपदी मायोभव्याय चतुष्पदी प्रजाभ्यः पञ्चपदी ऋतुभ्यः षट्पदी सखा सप्तपदी भव सा मामनुव्रता भव पुत्रान्विन्दावहै बहूंस्ते सन्तु जरदष्टय इति ॥**

अथैनामपराजितायां[1] दिशि सप्त पदान्यभ्युत्क्रामयति । इष एकपदीत्येतैर्मन्त्रैः । अथशब्दः पूर्वेण व्याख्यातः । अथात्र संशयः । किमेतावानेवायं[2] मन्त्रः । आहोस्वित् अन्योऽप्यस्ति[3] इति । कुतः पुनः संशयः । साकाङ्क्षत्वात्[4] । इष एकपदीति साकाङ्क्षोऽयं[5] मन्त्रः । एतावत्तावद्भवितव्यम्[6] । कस्मात् । अशेषानुपदेशात् । नेत्युच्यते । य[7] उपदिष्टः शेषः उत्तमेन मन्त्रेण स इहानुपपद्यते । तत्रोपदिष्टः[8] कथमिहानुकृष्यते । उच्यते । यथाग्निहोत्रे प्राश्नामीति पुरस्तादुक्तं उपरिष्टात् भवति[9] तेन यथा[10] तत्रानुकर्षो[11] भवति एवमिहापि अनुकर्षो[12] भविष्यति । तदेतन्नोपपद्यते । पुरस्तादुक्तं उपरिष्टाद्भवति[13] । उपरिष्टात्

[1] A. अथैनामशपजितायां.

[2] L. किमेतावानवायं.

[3] L. अहोस्विदन्त्योऽप्यस्ति. A. आहोस्विदत्योऽप्यस्ति.

[4] L. साकंक्षत्वात.

[5] A. साकांक्षो मन्त्रः

[6] A. एतावताद्भवितव्यम्.

[7] य omitted in L.

[8] ष्टः not at all clear in A. Looks more like पः

[9] A. भयति.

[10] A. पथ.

[11] L. तयानुत्कर्षो. A. तत्रानुत्कर्षो.

[12] A. L. अनुत्कर्षो.

[13] A. उपरिष्टाद्भावति.

विधीयमानः[1] पुरस्तान्न भवति । नेत्युच्यते । शास्त्रान्तरेऽप्युपरिष्टादप्याम्नातः पुरस्तात् भवति । यथा घृताचीनाम्ना[2] प्रियेण[3] प्रिये सदसि सीदेति यथोपरिष्टान्मन्त्रो दृष्टः । जुह्वादिषु च प्राणाय त्वेत्येवमादिषु उल्लिखामीति उपरिष्टादाम्नातः पुरस्ताद्भवति । एवमिहापि । नेत्युच्यते । इह याजुषाणां मन्त्राणां[4] अनुकर्षो[5] भवति । समासः ऋचः संपद्यन्ते[6] । सप्तपदी भवेति सामादिना[7] मन्त्रेणानुकृष्यमाणेन ऋचामनुकर्षः कृतो भवति । नेत्युच्यते । तस्मिन् सन्दिग्धे ऐतरेयिणां वचनमारब्धम् । भवादिषु सर्वत्र समानम्[8] । तेनेहाप्यनुषङ्ग एवाध्यवसीयते । तेनास्माकमप्यनुकर्षो भवति[9] ॥

अथशब्दः पूर्वेण तुल्यः । एनां वधूम् । अपराजिता प्रागुदीची । तत्र सप्तपदान्यभ्युत्क्रामयति वधूं सप्तभिर्मन्त्रैः । वाक्यस्य साकाङ्क्षत्वात् भवादेश्च योग्यत्वात् सन्निहितत्वाच्च प्रत्येकं सम्बध्यते । यथा रहस्ये उल्लिखामीति शब्दः 'प्राणाय त्वापानाय त्वा व्यानाय त्वोल्लिखामि' इत्यन्त्ये वाक्ये पठितोऽपि पूर्वत्रापि सम्बध्यते तद्वदत्रापि । ऐतरेयिभिरप्युक्तं—'भवादिषु सर्वत्र समानम्' इति । तेन इष एकपदी भव । सा मामनुव्रता भव इति सर्वत्र सम्बन्धनीयम् ॥ (१९)

**उभयोः सन्निधाय शिरसी उदकुम्भेनावसिच्य ॥**

[1] A. विधीययानः

[2] L. घृचीनाम्ना.

[3] A. L. नाम्ना extra after this word.

[4] A. मन्त्राणों.

[5] A. अनुत्कर्षे L. अनुत्कर्षो.

[6] L. संपद्यंते.

[7] L. सामादिनां.

[8] L. समासः

[9] Here L. has श्रीलक्ष्मीनारायणार्पणमस्तु.

उदकुम्भस्थेन उदकेनासेचनं[1] कर्तव्यम् । तत्रावसेचनं कृत्वा एतस्मिन् अन्तराले स्विष्टकृद्भवतीति ॥

सप्तमे पदे अभ्युत्क्रामिते तत्रस्थ एवोभयोः शिरसी सन्निधाय केनचिदुदकुम्भमानाय्य तत्रस्थेनोदकेन शिरसी अवसिञ्चति । अथाज्येन स्विष्टकृतं जुहोति ॥ (२०)

**ब्राह्मण्याश्च वृद्धाया जीवपत्न्या जीवप्रजाया अगार एतां रात्रिं वसेत् ॥**

ब्राह्मणी[2] या जीवपतिर्भवति[3] जीवप्रजा च या भवति तस्या एवंलक्षणाया ब्राह्मण्या अगारे एतामनन्तरां रात्रिं प्रतिश्रयेत् । तत्र प्रतिश्रयणे सत्ययं विशेषः । किमुक्तं भवति । देशान्तरे यदा विवाहः तदा प्रतिश्रयणविधिरयं भवति । किमर्थं स्त्री विशेष्यते न पुरुष इति । पुरुषस्य बहुभार्यत्वात् तस्य काचिन्मृतप्रजा भविष्यति । तस्या अगारे मा भूदिति अत्र स्त्रीविशेषणं क्रियते ॥

ग्रामान्तरगमने यद्यन्तरा वसतिः स्यात् तदा एवंगुणयुक्तायाः ब्राह्मण्या गृहेऽनन्तरां रात्रिं वसेत् । वसतिं कुर्यादित्यर्थः । स्वग्रामे विवाहश्चेन्नायं विधिः ॥ (२१)

**ध्रुवमरुन्धतीं सप्त ऋषीनिति दृष्ट्वा वाचं विसृजेत जीवपत्नीं प्रजां विन्देय इति ॥**

[1] A. उदकेनात्सेचनं.

[2] A. व्राणी.

[3] A. जीवपतिर्भवतिर्भवति.

जीवपत्नीत्यनेन मन्त्रेण वाग्विसर्गविधानात् वाङ्नियमोऽस्ति । कस्य पुनरयं वाग्विसर्गो भवति । उच्यते । वध्वाः । कुतः । मन्त्रलिङ्गात् ॥

समाप्ते होमे रात्रौ ध्रुवादीन् दृष्ट्वा वाचं विसृजेत 'जीवपत्नीम्' इति मन्त्रेण । इदानीं वाग्विसर्जनविधानात् होमादारभ्य एतावन्तं कालं वाचो नियम इति गम्यते । कस्यायं वाग्विसर्गः । वध्वाः । कुतः । मन्त्रलिङ्गात् । तथा हि । जीवः पतिर्यस्याः सा जीवपत्नी । जीव इति कर्तरि पचाद्यच् । 'पत्युर्नो यज्ञसंयोगे' [पा. ४. १. ३३] 'विभाषा सपूर्वस्य' [पा. ४. १. ३४] इति ङीप्प्रत्ययो नश्चान्तादेशः ॥ (२२)

इति सप्तमः खण्डः

---

**प्रयाण उपपद्यमाने पूषा त्वेतो नयतु हस्तगृह्य इति यानमारोहयेत् ॥**

प्रयाण उपपद्यमाने इति कस्मात् । पूषा त्वेतो नयतु हस्तगृह्य इति यानमारोहयेदित्येवमुच्यमाने त्वहरहर्यानारोहणं प्राप्नोति । एवमपि उपपद्यमानग्रहणं[1] अपार्थकम् । इदमपि[2] वक्तव्यम् । इतरथा हि प्रयाणे यानमेव नित्यं स्यात् । तत्र यानं नाम चक्रीवच्छकटादिकं[3] उच्यते[4] । उपपद्यमाने याने[5] अनेन मन्त्रेणारोहयेत् । असति यानेऽन्यत्रायं मन्त्रो[6] न भवति । अन्येनापि नयनं भवतीत्येतच्च ज्ञापितं भवति ॥

[1] A. L. उपपद्यमानाग्रहणं.

[2] A. L. इदकमपि.

[3] A. चक्रवशाछोदिष्कं.

[4] A. विद्यतेन. L. विद्युत्तेन.

[5] L. repeats याने.

[6] A. त्रोमं.

विवाहहोमानन्तरं स्वगृहं गन्तव्यम् । तत्र यदि ग्रामान्तरे गृहं स्यात् तथा सति तत्र प्रयाणे यदि यानमुपपद्यते तथा सत्युपपद्यमाने याने यानमारोहयेत् वधूं मन्त्रेण । तेन प्रयाणे यानस्यानियमः । यानादन्येन शिबिकादिना प्रयाणे च न भवति मन्त्रः । स्वग्रामविवाहपक्षे स्वगृहगमने नायं विधिः ॥ (१)

**अश्मन्वतीरीयते संरभध्वं इत्यर्द्धर्चेन नावमारोहयेत् ॥**

अर्धर्चग्रहणं ऋङ्निवृत्त्यर्थम् ॥

यद्यन्तरा नाव्या नदी स्यात् तदानेनार्द्धर्चेन नावमारोहयेत् । वधूमिति शेषः ॥ (२)

**उत्तरेणोत्क्रमयेत् ॥**

उत्तरेणार्धर्चेन उत्क्रमयेत् । तत्र चोत्क्रमयेत्[1] उत्तारयेद्वा[2] ॥

उत्तरेणार्द्धर्चेन अत्राजगाम इत्यर्द्धर्चेन वधूमुदकादुत्तारयेत् ॥ (३)

**जीवं रुदन्तीति रुदत्याम् ॥**

जपेत् ॥

नीयमाना वधूः यदि रोदिति बन्धुवियोगात् तदा एतां जपेत् । अयं विधिः स्वग्रामेऽपि भवत्यविशेषात् ॥ (४)

**विवाहाग्निमग्रतोऽजस्रं नयन्ति ॥**

[1] A. तचोत्क्रमयेत्. L. तत्रोत्क्रमयेत्.

[2] A. उन्मरयेत् द्वा. L. उत्तारयेत् (वा omitted).

विवाहाग्निग्रहणं अन्यस्याग्नेर्नयनं माभूदिति । अजस्रग्रहणं किमर्थम् । प्रत्यक्षनयनार्थम् । ननु[1] अग्निशब्दादेवायमर्थः सिद्धः । एवं[2] सिद्धे यदजस्रग्रहणं[3] करोति तज्ज्ञापयति अरणिमत्त्वं[4] माभूदिति । अविधानादरण्योः । कुतः प्रसङ्गः । अत एवाजस्रग्रहणं क्रियते अरणिमानयं भवतीति । तथा सत्यप्रत्यक्षस्य नयनं स्यात् । तन्मा भूत् इति कृत्वा यत्नः क्रियते । अरण्योश्च शास्त्रान्तरे दृष्टत्वात् । पुंसवनाद्येकेषां जातकर्माद्यपरेषाम् । उक्तं च प्राक्—शास्त्रान्तरदृष्टानामप्रतिषिद्धानां विधीनामिह प्रामाण्यम्—इति । अतः अरण्योरध्यवसायनं स्यादीदृग्यत्नात् । तेनैवं ब्रुवता एकस्मिन्नेवाग्नौ सर्वाणि कर्माणि भवन्तीति यदुक्तं प्राक् तत् सिद्धम् ॥

विवाहाग्निग्रहणं अग्निविशेषनियमाभावशङ्कानिवृत्त्यर्थम् । अजस्रग्रहणं ध्रियमाणस्य नयनार्थम् । तेनान्यत्र प्रयाणे समारोपणं कृत्वा नयनं गम्यते । अयञ्च विधिः स्वग्रामेऽपि भवत्यविशेषात् ॥ (९)

**कल्याणेषु देशवृक्षचतुष्पथेषु मा विदन् परिपन्थिनः इति जपेत् ॥**

तत्र कल्याणा इति शोभनाः प्रशस्ताः प्रकाशादित्यर्थः । तेषु कल्याणेषु देशादिषु एषा ऋग्भवति । नन्वन्येषामियं[5] ऋक्[6] भये[7] दृष्टा । इह भयं नोपपद्यते । नेत्युच्यते । इहापि भयमस्ति । कथम् ।

[1] L. नयनं तु.
[2] A. स व.
[3] A. यदस्रग्रहणं.
[4] A. अरणीमानयं.
[5] L. तत्रन्येतन्येषां नियम.
[6] A. ऋ L. omits ऋक्.
[7] L. उभये.

एतेषु देशेषु[1] कल्याणेषु गन्धर्वाप्सरसः सन्ति[2]। न तयोः दम्पत्योः लभ्यन्ते[3]। तेन तयोरपीदं भयस्थानं[4] भवति। तस्मादत्रापि भये एवैषा[5] ऋक्[6] प्रयुज्यते[7] ॥

कल्याणेषु विवाहादिशोभनेषु देशवृक्षचतुष्पथेषु एतां जपेत् ॥ (६)

वासे वासे सुमङ्गलीरियं वधूः इतीक्षकानीक्षेत ॥

वासे वासे इति वसतौ वसतौ इत्यर्थः। ये ईक्षका भवन्ति तान्[8] अनेन मन्त्रेण ईक्षेत[9] सुमङ्गलीरिति[10]। तत्र वासे[11] इति नियमार्थमारभ्यते। कः पुनर्नियमः। कथं वासे वासे एवेक्षणं स्यादिति। अन्यत्र ये ईक्षकाः तेषामीक्षणं मा भूदिति ॥

वसतौ वसतौ ईक्षकाः सन्ति चेत् तानेतया ईक्षेत। वासादन्यत्रेक्षणे न मन्त्रः। वीप्सावचनं प्रतिवसतौ मन्त्रप्राप्त्यर्थम् ॥ (७)

इह प्रियं प्रजया ते समृध्यतामिति गृहं प्रवेशयेत् ॥

[1] L. omits देशेषु.
[2] A. सन्तिति.
[3] L. लुभ्यन्ति. A. लभ्यन्ति.
[4] L. omits भय.
[5] A. L. एवैता.
[6] L. ऋच:
[7] L. प्रयुज्यन्ते.
[8] तान् not in the MSS.: inserted by me.
[9] A. L. ईक्षते.
[10] A. सुमंगलीरितिति.
[11] L. वासो.

इह प्रियमित्यनेन मन्त्रेण गृहं प्रवेशयेदिति[1] ॥

अनया वधूं गृहं प्रवेशयेत्। इदमादयो विधयः स्वग्रामेऽपि विवाहे भवन्ति ॥ (८)

**विवाहाग्निमुपसमाधाय पश्चादस्यानडुहं चर्मास्तीर्य प्राग्ग्रीवमुत्तरलोम तस्मिन् उपविष्टायां समन्वारब्धायां आ नः प्रजां जनयतु प्रजापतिः इति चतसृभिः प्रत्यृचं हुत्वा समञ्जन्तु विश्वेदेवाः इति दध्नः प्राश्य प्रतिप्रयच्छेदाज्यशेषेण वाऽनक्ति हृदये ॥**

तत्र विवाहाग्निग्रहणं न कर्तव्यम्। कस्मात्। अधिकृतत्वात्। अत एव कर्तव्यम्। नयने अधिकृतत्वात्[2]। होमे यः कश्चनाग्निः प्रसज्येत स मा प्रसाङ्क्षीदिति[3] विवाहाग्निग्रहणं क्रियते। उपसमाधायेति न वक्तव्यं सिद्धत्वात्। तत्र क्रियते चर्मास्तरणकालोपदेशार्थम्[4]। अथवा एककर्त्रर्थम्। तेन किं सिद्धं भवति। अन्यत्रान्योऽप्युपसमाधानं करोति[5]। न विवाहे उपसमाधानं अन्यः करोतीति। पश्चादित्यग्नेर्देशः। प्रत्यगित्यर्थः। अस्याग्नेः। आनडुहं इति[6] चर्मविशेषणं क्रियते। प्राक् चास्य ग्रीवा भवति। ऊर्ध्वं लोमानि च[7] भवन्ति। तस्मिन् उपविष्टायामिति[8]। तस्मिन्निति न

[1] A. प्रवेशयति.

[2] A. नयनेयधिकृतत्वात्. Between य and धि there is a curved stroke which looks like a half त.

[3] A., L. समाप्यसाकांक्षादिति.

[4] A. चर्मास्तरणं कालोपदेशार्थम्.

[5] A. करोतिति.

[6] A. आनडुहमिमिति.

[7] L. च omitted.

[8] A. उपविष्टयति.

वक्तव्यम् । अधिकृतत्वात् । तस्मिन्निति यदि नोच्यते न चात्रोपवेशनं स्यात् । तस्माद्वक्तव्यम् । समन्वारब्धायाम्[1] । समन्वारब्धवत्यामित्यर्थः । आ नः प्रजां जनयतु प्रजापतिः[2] इति चतसृभिः ऋग्भिः । प्रत्यृचं होमो भवति । तत्र प्रत्यृचग्रहणमपार्थकम् । यथा धाता ददातु इत्यत्र प्रत्यृचं होमो भवति असति प्रत्यृचग्रहणे एवमिहापि भविष्यति । तस्मात् प्रत्यृचग्रहणं न भवति । उच्यते । कर्तव्यम्[3] । इह एते होममन्त्राः कर्मकरणाः । कर्मकरणत्वात् स्वाहाकारान्तता इति । यत्र प्रत्यृचग्रहणं नास्ति तत्र च स्वाहाकारान्ते होमः कर्तव्यः । तेन क्वचिदुद्देशेन होमः स्यादिति नैवास्ते । तत्र तु वचनम् । तत्परीक्षा क्रियते[4] । समञ्जन्तु विश्वे देवा[5] इति दध्नः प्राश्य प्रतिप्रयच्छेत्[6] । तत्र संशयः । किमयं प्राशनमन्त्रः । आहोस्वित्प्रयच्छनमन्त्र इति । उच्यते । उभयार्थः । यद्युभयार्थः अभ्यासः[7] प्राप्नोति । उच्यते । न भवत्यभ्यासः । कस्मात् । उभयलिङ्गत्वात्[8] मन्त्रस्य । यथा द्वयोरभिमर्शनमन्त्रः[9] सकृदेव प्रयुक्तः सन्नुभयार्थो भवति तद्वदयमपीति । स्वयं प्राश्य पश्चात् प्राशनार्थं तस्याः प्रयच्छति । आज्यशेषेण वानक्ति हृदये । अथवाज्यशेषेण हृदये अनक्ति । न पूर्वं करोति । द्वे हृदये अनक्ति । आत्मनश्च तस्याश्च । अनेनैव मन्त्रेण । अपरे आज्यशेषेण वानक्ति हृदये इति वाशब्दं चार्थे[10] वर्णयन्ति ॥

[1] L. समन्वारब्धायामिति.

[2] L. जनयतु प्रजापतिः omitted.

[3] A., L. have न before this word.

[4] L. has here *श्रीलक्ष्मीनारायणार्पणमस्तु*.

[5] L. omits विश्वे देवाः

[6] A. has only समञ्जतु प्रयच्छेत्.

[7] A. अ not at all legible. Looks more like ज्य.

[8] L. has तु before this word.

[9] A. यथा भार्ययोरभिमर्शनमन्त्रः L. यथाद्दार्ययोरभिमर्शनमन्त्रः

[10] A., L. have अथवाशब्दः चार्थो.

अग्निप्रणयनान्तं कृत्वाग्निमुपसमादधाति। समिधः प्रक्षिप्य प्रज्वलयतीत्यर्थः। ततः पश्चादस्यानडुहं चर्मास्तृणाति। प्राग्ग्रीवमुत्तरलोम ऊर्द्ध्वलोम। ततोऽन्वाधानाद्याज्यस्य बर्हिषि सादनान्तं कृत्वा तस्मिन् चर्मण्युपविष्टायां समन्वारब्धायां वध्वां इध्माधानाद्याज्यभागान्तं कृत्वा आ नः प्रजां इति चतसृभिः प्रत्यृचं हुत्वा ततः समञ्जन्तु इत्यृचा दध्न एकदेशं स्वयं प्राश्य वध्वै प्राशनार्थं शिष्टं दधि प्रयच्छेत्। सा तु तूष्णीं प्राश्नाति। सकृत् प्रयुक्तस्य मन्त्रस्य उभयप्राशनार्थत्वात्। उभयार्थत्वं नौ इति द्विवचनात्। आज्यशेषेण वा उभयोर्हृदये अनक्ति तेनैव मन्त्रेण। हृदये अत ऊर्ध्वं इति विवृत्या पाठः कार्यः प्रगृह्यत्वात्। ततः स्विष्टकृदादि समापयेत्। विवाहाग्निग्रहणं अन्यनिवृत्यर्थम्। कथं पुनरन्याग्निप्राप्तिशङ्का। 'गृह्याणि वक्ष्यामः' (१।१।१) इति प्रतिज्ञातम्। उच्यते। दायविभागकाले अग्निः परिगृह्यते चेत् अत्राप्यन्योऽग्निः प्रसज्येत। तन्निवृत्यर्थमिदम्। अपिचात्र विवाहाग्निग्रहणात् न विवाहहोममात्रेण अग्नेर्गृह्यत्वसिद्धिः। किन्तर्हि। गृहप्रवेशनीयहोमे कृते। एवमुभाभ्यां होमाभ्यां गृह्यत्वसिद्धिः। नैकेन इति ज्ञायते। तेन गृहप्रवेशनीयहोमादर्वाक् दर्शपूर्णमासप्राप्तौ पार्वणस्थालीपाको न कार्यः। परिचरणहोमस्तु कार्य एव। 'पाणिग्रहणादि' (१।८।१) इति वचनात्। वैश्वदेवं च कार्यमेव। तस्याग्निविशेषविध्यभावात्। तेनाग्निनाशे होमद्वयं कार्यमिति सिद्धम्। उपसमाधायेति आस्तरणकालोपदेशार्थम्। अथवा समानकर्तृकत्वसिद्ध्यर्थम्। तेन यत्रोपसमाधानग्रहणं नास्ति तत्रान्यो वोपसमाधानं कुर्यात्। तस्मिन्निति वचनं चर्मस्तरणानन्तरं तन्त्रान्तरमिति ज्ञापनार्थम्। प्रत्यृचग्रहणं कथं ऋगन्ते होमः स्यात्। न स्वाहाकारान्ते इत्येवमर्थम्। स्वाहाकारं पठन् जुहुयादित्यर्थः। तेन यत्र प्रत्यृचग्रहणं नास्ति तत्र स्वाहाकारं कृत्वा पश्चात् होमः। आज्यशेषेण वेति सिद्धवदुपदेशात् अनादेशे आज्येन होम इति गम्यते॥ (९)

**अत ऊर्ध्वमक्षारालवणाशिनौ[1] ब्रह्मचारिणावलंकुर्वाणावधःशायिनौ स्याताम्॥**

[1] अत ऊर्ध्वं is not in the Bibliotheca Indica edtion.

अत ऊर्ध्वं इति। अत इत्यनेन किं निर्दिश्यते। गृहप्रवेशनीयः। तस्य[1] प्रकृतत्वात्। तेन प्रवेशनीयादूर्ध्वमनयोर्व्रतचर्या भवति। यद्येवं दोषः। को दोषः। प्राग्गृहप्रवेशनादेतानि व्रतानि न[2] प्राप्नुवन्ति। इष्यते च। तस्मान्नायमर्थः। एवं तर्हि अतःशब्देन विवाहो निर्दिश्यते। ननु च व्यवधानाद्गृहप्रवेशनेन तस्य निर्देशो नोपपद्यते। नेत्युच्यते[3]। विवाह एव प्राधान्येन प्रकृतः। गृहप्रवेशनीयः प्रसंगोक्तः। तस्माद्विवाह एव निर्दिश्यते अत इति। तेन विवाहादूर्ध्वमनयोः व्रतचर्या भवति। एवमपि दोषः। प्रागपि गृहप्रवेशनीयात् व्रतसमाप्तिः प्राप्नोति। न चेष्यते। तस्मादेष दोषः। एवमुभयथापि दोषः। एवं तर्ह्यन्यथा सूत्रविन्यासं करिष्यामः। अक्षारलवणाशिनौ[4] ब्रह्मचारिणावधःशायिनौ स्याताम्। तेनेमानि विवाहप्रभृतीनि विधीयन्ते ॥

विवाहादारभ्य एते नियमा भवन्त्युभयोः।

हेडिम्बिका राजमाषा माषा मुद्गा मसूरिकाः।
लङ्कयाढक्याश्च निष्पावास्तिलाद्याः क्षारसंज्ञिताः ॥

गृहप्रवेशीयहोमात् प्रागपि नियमानामिष्टत्वात् योगविभागः कृतः ॥ (१०)
उत्तरावधिमाह।

## अत ऊर्ध्वं त्रिरात्रं द्वादशरात्रम् ॥

तेन अतःशब्देन गृहप्रवेशनीयो गृह्यते। तेन गृहप्रवेशनीयादूर्ध्वं[5]

[1] A. L. गृहप्रवेशनीयस्य.
[2] A. omits न.
[3] L. omits नेत्युच्यते.
[4] L. अक्षारलवणाशिनाविति and omits all up to स्याताम्.
[5] L. गृहप्रवेशादूर्ध्वम्.

कालनियमो भवति[1] । प्राक् च अनियतः कालः । एवमादिष्टोऽर्थः सिद्धो भवति[2] ॥

अतो गृहप्रवेशनीयहोमादूर्ध्वं त्रिरात्रं द्वादशरात्रं वा नियतौ स्याताम् ॥ (११)

संवत्सरं वैक ऋषिर्जायत इति ॥

संवत्सरमेके व्रतमिच्छन्ति । कस्मात् । एवं नियमसंयुक्तस्य ऋषिकल्पः किल पुत्रो जायत इति ॥

संवत्सरं वा नियतौ स्यातां एक ऋषिकल्पः पुत्रो जायत इति कृत्वा । अन्ये त्वाहुः । व्रतान्ते एक ऋषिः सम्पद्यते । पितृगोत्रं विहाय पतिगोत्रं भजते इत्यर्थः ॥ (१२)

चरितव्रतः सूर्याविदे वधूवस्त्रं दद्यात् ॥

चरितव्रतः समाप्तव्रत इत्यर्थः । सूर्याविद् । सूर्यया[3] दृष्टो मन्त्रः सूर्यैव भवति । यथा[4] वृषाकपिरिति । तं मन्त्रं यो वेत्ति स भवति सूर्यावित् । तस्मै सूर्याविदे वधूवस्त्रं दद्यात् । कथं पुनरसौ वेदितव्यः । स्वरैर्वर्णैः इत्येवमादिभिः लक्षणैः । तच्च कतमस्य पुनर्वाससः दानमुपदिशति । यद्वासः विवाहकाले[5] आसीत् तस्येदं दानमुपदिष्टं द्रष्टव्यम्[6] ॥

[1] L. कालनियमोऽयं प्राप्नोति.

[2] After कालनियमो भवति, A. has यतः काल एवेष्टोऽर्थः सिद्धो भवति ; L. has अतः काल एवेष्टोऽर्थः सिद्धो भवति.

[3] L. सूर्याया.

[4] L. तथा.

[5] A., L. यद्वासस्त्र्यवधापकाले.

[6] K. दानमुपदिष्टव्यं. Both A. and L. have कृत्यं after this.

व्रतानन्तरं सूर्याविदे वध्वा उपयमनकाले उपहितं वस्त्रं दद्यात्। सूर्यया दृष्टो मन्त्रः सूर्या। यथा वृषाकपिरिति। सा च सत्येनोत्तभिता इति सूक्तम्। कथं तत् पुनरसौ वेत्ति। स्वरतो वर्णत इत्यादि ॥ (१३)

**अन्नं ब्राह्मणेभ्यः ॥**

अन्नं ब्राह्मणेभ्यो दद्यात् ॥

दद्यादिति शेषः ॥ (१४)

**अथ स्वस्त्ययनं वाचयीत ॥**

अथानन्तरं स्वस्त्ययनवाचनं[1] स्वस्तिरिति ॥

ओं स्वस्ति भवन्तो ब्रुवन्ति इति। ते च ओं स्वस्तीति प्रत्यूचुः ॥ (१५)

इति प्रथमे अष्टमी खण्डिका

---

**पाणिग्रहणादि गृह्यं परिचरेत् स्वयं पत्न्यपि वा पुत्रः कुमार्यन्तेवासी वा ॥**

पाणिग्रहणमादिर्यस्य तदिदं पाणिग्रहणादि विधानम्। किं पुनस्तत्परिचरणं पाणिग्रहणाद्वेदितव्यम्। तत्र पाणिग्रहणादिग्रहणं न कर्तव्यम्।

[1] A. स्वस्त्ययनं वाचनं.

अधिकृतत्वात् । नेत्युच्यते । गृहप्रवेशनीयोऽधिकृतः । तेन गृहप्रवेशनीयादूर्ध्वं गृह्यपरिचर्या स्यात् । अतः पाणिग्रहणादिग्रहणं[1] क्रियते । ये पुनः पाणिग्रहणमधिकृतं मन्यन्ते तेषां किं प्रयोजनम् । कथमव्यवच्छिन्नं परिचरणं[2] स्यादित्यतो वचनमारभ्यते । कथं पुनर्व्यवच्छेदः स्यात् । उपदेशादेव । नेत्युच्यते । यावन्नोपशाम्येत[3] गृह्योऽग्निस्तावत्परिचरणं स्यात् गृह्यभावात् । कथमुपशान्तेऽप्यन्यमग्निमाहृत्य[4] होमकार्ये आहरणप्रायश्चित्तं कृत्वा परिचरणं स्यात् इति अतो वचनमारभ्यते । तत्र गृहसंप्रयोगादयं गृह्य इत्येषा संज्ञा भवति । तत्र किं परिचरणं यदिदं[5] कर्मोत्तरं[6] विधास्यते । एतत्परिचरणं सहोमकर्मके मन्यन्ते । अन्ये[7] पुनर्लौकिकमेवेच्छन्ति । कस्मात् । मन्त्रविरोधात् । न हि कन्याया मन्त्रेऽधिकारो भवति पत्न्याश्च । नेत्युच्यते । अनयोरपि मन्त्रो भवति । यथा पत्नीवाचनादि पत्न्या भवति तद्वदिहापीति । तस्माद्द्वयोरपि मन्त्रः सिद्धः । स्वयंग्रहणमुत्तरविवक्षायाम् । अथ अपरे । पाणिग्रहणादिप्रयोजनं परिचरणस्य कालविध्यर्थम्[8] । गृह्यस्यैव यदा पाणिग्रहणं तदाद्येव[9] गृह्यस्य परिचरणं न प्राक् । कथं पुनः प्राक् स्यात् । गृह्यं परिचरेदित्यविशेषणाभिधानात् । तस्मादिदं वचनम् । तेनैवं[10]

[1] A. L. पाणिग्रहणं.

[2] A. कथमव्यवच्छिन्नत्वं परिचरणं.

[3] A. यावन्नोमपशोम्येत.

[4] L. कथमुपशम्यति.

[5] L. omits यदिदं.

[6] L. परिचर्योत्तरं.

[7] A. L. सहोमकमन्ये.

[8] L. कालविधानार्थम्.

[9] L. तदाद्येव.

[10] L. तेनैव.

ब्रुवता तेनैवाग्निः उत्पन्न[1] इत्येतत्साधितं भवति । साधारण्यं[2] धारिण्याः कर्मव्यतिरिक्ते काल इति । पत्नी वा[3] परिचरेत् । अथवा पुत्रादयः परिचर्यां कुर्वन्ति । तत्रान्तेवासीति शिष्य[4] उच्यते ॥

पाणिग्रहणप्रभृति गृह्यमग्निं परिचरेत् स्वयं पत्न्यादयो वा । पाणिग्रहणादिवचनं गृहप्रवेशनीयहोमानन्तरकाले प्रारम्भशङ्कानिवृत्त्यर्थम् । यद्विधास्यते तत्परिचरणम् । पत्नीकुमार्यौ न होमकर्म कुर्यातामित्येके । कुतः । स्त्रीणां मन्त्रानधिकारात् । अन्ये तु सहोमकम् । कुतः । वचनात् पत्नीसन्नहनवत् । अन्तेवासी शिष्यः ॥ (१)

नित्यानुगृहीतं स्यात् ॥

नित्यं परिगृहीतः[5] स्यादित्यर्थः । यावज्जीवमग्नेः संधारणमित्येतत्प्रदर्शयति[6] । अयमस्य मुख्योऽर्थः । कथं पुनरेतत् ज्ञायते । अनुगमने प्रायश्चित्तोपदेशात् । धारणं च विहितम् । एतत्सिद्धं भवति एतावता । असंमुख्यमाना[7] वहुधा कल्पयन्ति । कथम् । यदि धारणमेवात्र विवक्षितं[8] स्यात नित्यः स्यादिति सिद्धमेतावता । अनुगृहीतवचनं किमर्थम् । एवमतिरिच्यमाना अनुगृहीतवचनं ब्रुवते । नित्यं[9] अनुगृहीतश्च नित्यानु-

[1] L. तेनैवाग्निमुत्पन्न.
[2] A. साधारणं.
[3] A. L. पत्नी वा.
[4] A. L. विशेष for शिष्य.
[5] A. L. have no परि.
[6] A. यावदिपेसेधारणमित्येतत्प्रादर्शयति. L. यावज्जीवादिसंधारणमित्यतप्रदर्शयति.
[7] A. L. असंमुख्यमाणा.
[8] A. L. विवक्षितः
[9] L. omits नित्यं.

गृहीतः। किं साधनम्। अयं गृह्योऽग्निरस्य नित्यो भवति। क्वचिदनुगृहीतः। यान्यस्य पार्वणादीनि कर्माणि तेषु नित्यः। नित्यशब्दः कूटस्थवाची[1]। यानि पुनरस्यापत्यानां कर्माणि जातकर्मादीनि तत एव[2] एकदेशं गृहीत्वा तानि कर्माणि कर्तव्यानि। सोऽनुगृहीत इत्येवं कल्पयन्ति। कस्मात्। तेषां मन्त्राभावात्। तदेतदनुपपन्नम्। कस्मात्। जातो हि सन्[3] संस्कारमाकाङ्क्षते। स च संस्कारः परस्याग्नौ नोपपद्यते। अयं च परोऽग्निः। तस्मात्[4] नैतस्मिन्नग्नौ संस्कारो भवति। एषां स्वाग्निराकाङ्क्षितः[5]। तस्मादनुगृहीतवचनं तदवस्थमेव। एवं तर्ह्यनुगृहीतशब्दः परिगृहीतार्थः कल्पते अनेकार्थत्वमुपसर्गाणां दृष्ट्वा। कोऽर्थः स्मर्यते। ये एते होमधर्मा उल्लेखनादिप्रतिष्ठापनान्ताः एतेषामपि प्रतिहोमं प्रवृत्तिः प्राप्नोति। देशान्तरनयनेऽपि कथमेतेषामादावेव[6] क्रिया स्यात्। न पुनः पुनः। इत्यतो नित्यपरिगृहीतवचनम्। अपरे पुनरन्यथा[7] नित्यो धार्यः स्यात् अनुगृहीतो वेति विकल्पं वर्णयन्ति। नित्यशब्दो नित्यार्थः। एवमनुगृहीतवचनम्। कस्मात्। कर्मणोऽर्थाय अनुगृहीत इत्यनुगृहीतः। अनित्यधारणप्रदर्शनार्थम्। तत्तत् कर्म कृत्वा त्यज्यते इत्यनुगृहीतवचनमुत्तरविवक्षया। अपरे त्वेवमत्र विकल्पं विनिवेशयन्ति। क्वचिन्नित्य एव क्वचिदनुगृहीतः। त्रेतायां[8] प्रवेशान्नित्य एव स्यात्। तदा नित्यवचनमुत्तरविवक्षया चोत्तरयोरनुगते[9] सति

[1] A. L. नित्यशब्दात्कूटस्थवाची.
[2] A. omits एव.
[3] L. omits सन्.
[4] A. अयं च परोऽग्निस्तस्मात.
[5] A. L. स्वाग्निराकांक्षा:
[6] A. कथमेतेषामादौवेवन.
[7] L. अपरे तु तदन्यथा.
[8] A. षट् त्रताया.
[9] A. L. चेतयोमनुगते.

अन्यभावपक्षमात्रे प्राप्ते अनुगृहीतवचनम् । तस्मै कर्मणेऽप्ययमनुगृहीत[1] इत्यतः अनुगृहीत एव यथा प्रयोजनम् । अन्येषां त्वसति प्रातराहुतिं हुत्वा दक्षिणाग्नौ गृह्याग्निमचा । एवमेतद्विचार्यम् ॥

अनुशब्दः परिशब्दस्य स्थाने । नित्यं परिगृहीतं स्यादित्यर्थः । किमुक्तं भवति । यदि विवाहाग्निर्नष्टः स्यात् ततो नष्टाहरणप्रायश्चित्तं कृत्वा परिचरेदिति । अथवा आत्मनः पत्न्या वा समीपे कथं नित्यः स्यात् । नोभयोरन्यतरः स्थापयितव्य इति । अथवा होम्यद्रव्यस्योपलेपनादेर्निवृत्त्यर्थम् । तदपि हि क्वचग्रहणेन प्राप्नोति परिसमूहनादिवत् ॥ (२)

यदि तूपशाम्येत् पत्न्युपवसेदित्येके ॥

यदि खल्पशाम्येत पत्न्या उपवासो भवतीति एके आचार्या मन्यन्ते । अन्ये पुनर्यजमानस्येच्छन्ति । यदि तूपशाम्येदुपवासः[2] अस्येत्येके[3] । अन्ये पुनरन्यत्प्रायश्चित्तमुपदिशन्ति । अपि वोत्तरया जुहुयात्[4] अयाश्चाग्ने इत्येतया । एवमेके[5] ॥

यदि प्रादुष्करणकाल उद्वायेत् ततः अन्यस्मात् होमकालात् पत्न्युपवसेदित्येके । एकेग्रहणात् यजमान उपवसेदित्येके । अयाश्चाग्न इत्येकामाहुतिं जुहुयात् इत्येके । कुतः । शास्त्रान्तरे दर्शनात् । अन्ये तु पूर्वसूत्रमेवं व्याचख्युः । नित्यशब्द उक्तार्थः नित्यमाचमनमिति । यथा अनुशब्दः पश्चाद्वचनः । एतदुक्तं भवति । यदि वैवाह्यो न गृहीतो दायविभागकाले गृह्यते ।

[1] A. L. कर्मणेऽप्यायमनुगृहीत.
[2] L. तूपशाम्येदुपवासः
[3] L. भवत्येके for अस्येत्येके.
[4] A. जुहुयात्तचं. L. जुहुयात्तत्र.
[5] Here L has लक्ष्मीनारायणार्पणमस्तु.

गृहीतोऽपि नष्टो वा द्वादशरात्रमतिक्रान्तः। तत उक्तया क्रियया पश्चात् गृहीतो भवतीति। तत्र विवाहाज्याहुतयो लाजाहुतयो गृहप्रवेशनीयाज्याहुतयश्च हृदयाञ्जनं च भवति नान्यत् कन्यासंस्कारत्वात्। होमद्वयं चात्र समानतन्त्रं स्यात्। लाजहोमोऽत्रापि पत्न्यञ्जलिना कार्यः। तद्धोमे तस्य साधनत्वेन दृष्टत्वात्। लाजावपनं तु स्वयमेव करोति न भ्राता। दायविभागकाले गृह्यमाणे प्रयोगविशेषोऽन्वेष्यः॥ (३)

तस्याग्निहोत्रेण॥

तस्य। कस्य। गृह्यस्य अग्निहोत्रेण॥

तस्यग्रहणं योगविभागार्थम्। तस्याग्निहोत्रेणैव विधिर्भवति नान्येन। तेन पाकयज्ञतन्त्रं न भवति। तर्हि प्राशनादयोऽपि स्युरित्याशङ्क्याह॥ (४)

प्रादुष्करणहोमकालौ व्याख्यातौ॥

प्रादुष्करणं च होमकालश्च व्याख्यातः उत्सर्गेऽपराह्ण इत्यत्र। तस्येति न वक्तव्यम्। कस्मात्। अधिकृतत्वात्। उच्यते। तस्यग्रहणं क्रियते योगविभागार्थम्। तस्याग्निहोत्रेणैव[1] विधिर्व्याख्यातो वेदितव्यो नान्येनेति तत्र तत्र[2] निवर्तितं भवति। अथ होष्यद्धर्माणामपि[3] निवृत्तिः प्राप्नोति। न भविष्यति। प्राक्कृतो यत्नः यत्र क्वचेति। एवं अग्निहोत्रेणेत्यतिप्रसक्तो[4] विधिः। तेनोत्तरमारभ्यते। प्रादुष्करणहोमकालावेव भवेतां नान्यदिति।

[1] A. has तस्याग्निहोत्रेण विधिर्व्याख्यातः किमेव सिद्धं भवति between योगविभागार्थम् and तस्याग्निहोत्रेणैव। L. तस्याग्निहोत्रेण.

[2] A. तत्र तंत्र.

[3] A. होष्यधर्माणामपि. L. होष्यकर्माणामपि.

[4] L. अग्निहोत्रेणेसति प्रसक्तो.

तत्रैके एतस्मिन् पचनमिच्छन्ति । तथा सति प्रादुष्करणकालव्यपदेशोऽनर्थकः । कस्मात् । नित्यं प्रादुष्कृतत्वात् पचनस्य । अप्रादुष्कृते च पचनं नोपपद्यते । प्रादुष्करणकालव्यपदेशात्तु मन्यामहे । एतस्मिन्नेव काले प्रादुष्करणं नान्यस्मिन् काले । अप्रादुष्कृते च पचनं नोपपद्यते । तस्मान्नैतस्मिन् पचनम् । परिचरणोपदेशाच्च[1] । विशिष्टेन च कर्ता यथा स्यादभिसम्बन्धो यथायमग्निः । पचनस्य च[2] मांसान्यत्वात् एतस्मिन्[3] पचनं भवतीति सिद्धम् । किं पुनः पचनम् । तदुत्तरत्र विचारयिष्यामः ॥

प्रादुष्करणं नाम अपराह्णे गार्हपत्यं प्रज्वाल्येति । एवं प्रातर्व्युष्टायामिति च । प्रदोषान्तो होमकालः सङ्गवान्तः प्रातरिति । एतावेव भवतो नान्यदित्यर्थः ॥ (९)

हौम्यं च मांसवर्जम् ॥

हौम्यं चाग्निहोत्रेण व्याख्यातं मांसं वर्जयित्वा । मांसप्रतिषेधान्मन्यामहे यथान्यान्यपि[4] द्रव्याण्यग्निहोत्रे भवन्तीति । स्वशास्त्रदृष्टानि शास्त्रान्तरविहितानि च परिसंख्यातानि भवन्ति ॥

हौम्यं चाग्निहोत्रेण व्याख्यातम् । पयसा नित्यहोम इत्यादि पञ्च द्रव्याण्याम्नातानि । मांसवर्जमिति मांसप्रतिषेधात् शास्त्रान्तरे दृष्टमपि हौम्यं भवतीति गम्यते ।

[1] L. omits च.

[2] A. पचनस्य च नस्य च. L. omits च.

[3] A. नैतस्मिन्.

[4] L. यथान्यपि.

पयो दधि यवागूश्च सर्पिरोदनतण्डुलाः ।
सोमो मांसं तथा तैलमापस्तानि दशैव तु ॥

द्रवद्रव्याणि स्रुवेण जुहोति । कठिनानि तु पाणिना । येन द्रव्येण सायं जुहोति तेनैव प्रातः प्रतिनिधिवर्जम् ॥ (६)

कामं तु व्रीहियवतिलैः ॥

व्रीह्यादिभिर्वा होमः कार्यः[1] । कामं त्विति कस्मादुच्यते । वाशब्दे क्रियमाणे तुल्यविकल्पः स्यात् । अतः कामं त्वित्युच्यते । अथात्र संशयः[2] किं व्रीह्यादिभिः समस्तैर्होमः[3] यद्वान्यतरेणेति[4] । समस्तैः प्राप्नोति । कस्मात् । समासनिर्देशात्[5] । न भविष्यति[6] । किं कारणम् । न्यायविरोधात् । अन्यतरेणापि होमे क्रियमाणे अर्थादर्थो निर्वर्तितो भवति । शास्त्रान्तर-प्रसिद्धेश्च । येन[7] व्रीहयोऽपि पृथक् चोद्यन्ते[8] । यवा अपि पृथक् । व्रीहि-भिर्यजेत । यवैर्यजेत इति स्वशास्त्रेऽपि दर्शनात् । न भविष्यति समस्तैर्होमः । वक्ष्यति कचित्पूर्णशरावाणि निदधाति ॥

कामवचनं पूर्वोक्ताभावे कथमेतेषां ग्रहणं स्यात् इत्येवमर्थम् । व्रीह्यादयश्च प्रत्येकं साधनानि न मिश्राणि । तच्च न्यायतोऽवगन्तव्यम् ॥ (७)

[1] L. कर्तव्यः
[2] A. अथानन्तसंशयः
[3] A. L. have इति after this.
[4] A. यन्नादन्यतरेणेति.
[5] A. L. समाननिर्देशात्.
[6] L. भविष्यामि.
[7] A. शास्त्रान्तरप्रसिद्धेश्च यैर्न. L. शास्त्रान्तरप्रसिद्धेश्च योन.
[8] A. पृथक्कोप्येते. L. पृथकोप्येते.

**अग्नये स्वाहेति सायं जुहुयात् सूर्याय स्वाहेति प्रातस्तूष्णीं द्वितीये उभयत्र ॥**

आभ्यां मन्त्राभ्यां सायं प्रातः जुहोति। तूष्णीं होमधर्मप्राप्त्यर्थम्। उभयत्र सायं प्रातश्चेत्यर्थः[1] ॥

तूष्णीं द्वितीये आहुतीं जुहोति। तूष्णींवचनं प्रजापतिध्यानार्थम्। उभयत्र सायं प्रातश्चेत्यर्थः। अग्निं परिसमूह्य परिस्तीर्य पर्युक्ष्य होमद्रव्यस्याग्निहोत्रवत्तूष्णीं संस्कारं कृत्वा ततोऽग्नये स्वाहेति जुहोति। ततः प्रजापतये इति चतुर्थ्यन्तं शब्दरूपं ध्यात्वा स्वाहेत्युपांशूक्त्वा द्वितीयाहुतिं जुहोति। ततः परिसमूहनपर्युक्षणे। एवं सायम्। प्रातर्होमे तु पूर्वमन्त्रस्थाने सूर्याय स्वाहा इति विशेषः ॥ (८)

इति प्रथमे नवमी कण्डिका

---

**अथ पार्वणः स्थालीपाकः ॥**

अथशब्दोऽधिकारार्थः। पार्वण इति पर्वणि भवः। तत्र पक्षसन्धिः पर्वेत्युच्यते पौर्णमासी च अमावास्या च। तत्र पर्वग्रहणं न कर्तव्यम्। कस्मात्। तस्य दर्शपूर्णमासाभ्यामुपवासः इति वचनात् पर्वण्येव भविष्यति। दर्शपूर्णमासाभ्यामुपवास इत्युपदेशादुपवास एव प्रसज्यते[2]। न पुनः कालः। पाणिग्रहणादिवचनात् अहरहः क्रिया प्राप्नोति। सा मा भूदिति कृत्वा पर्वग्रहणं क्रियते। स्थालीपाक इति कर्मणो नामधेयम् ॥

[1] Here L. has श्रीलक्ष्मीनारायणार्पणमस्तु.

[2] A. एव न प्रसज्येत. L. एव न प्रसज्येते.

उक्तोऽर्थः। पर्वणि भवः पार्वणः। स्थालीपाक इति कर्मनामधेयम्। दर्शपूर्णमासातिदेशात् काले सिद्धे पार्वणवचनं पाणिग्रहणाद्यहरहःक्रियाशङ्का-निवृत्त्यर्थम्। विवाहादनन्तरं या पौर्णमासी तस्यामस्य प्रथमारम्भः। प्रतिपद्यौपासनं हुत्वा ततः परिसमूहनादि प्रारभेत॥ (१)

**तस्य दर्शपूर्णमासाभ्यामुपवासः॥**

तस्य। कस्य। पार्वणस्य। दर्शपूर्णमासाभ्यामुपवासो व्याख्यातः। तस्येति न वक्तव्यम्। प्राक् कृतत्वात्। उच्यते। तस्यग्रहणं नियमार्थम्। कः पुनर्नियमः। तस्यैव पार्वणस्य कथमयमुपवासविधिः स्यात् अन्यत्र मा भूदिति। कथं प्रसज्येत। एतत्तन्त्रं इति सर्वपाकयज्ञेऽप्येतत्तन्त्रं भवति। एवमुपवासोऽपि तत्र स्यात्। स मा भूदित्यतो नियमः क्रियते। अथ कीदृग्लक्षणोऽयमुपवासशब्दः। अभोजने प्रसिद्धो लोके। इह तु नाभोजने। सकृद्भोजनस्य शास्त्रान्तरविहितत्वात्॥

तस्यग्रहणं नियमार्थम्। तस्यैवोपवासो यथा स्यात् तदतिदिष्टानां मा भूदिति। दर्शपूर्णमासाविति कर्मनामधेयम्। उपवास इत्येकभोजनम्। सर्पिर्मिश्रं दधिमिश्रं अक्षारलवणमशितव्यमित्यादयश्च नियमा लक्ष्यन्ते। तस्य ताभ्यामुपवासो व्याख्यात इत्यर्थः॥ (२)

**इध्माबर्हिषोश्च सन्नहनम्॥**

इध्माबर्हिषोश्च सन्नहनं बन्धनमित्यर्थः। तच्च दर्शपूर्णमासाभ्यां व्याख्यातम्। शास्त्रान्तरे यथा दृष्टं तथा सन्नहनं कर्तव्यम्। समन्त्रकमन्त्रकं[1] वा॥

अनयोश्च बन्धनं ताभ्यां व्याख्यातम्। इध्मः पञ्चदशदारुकः इति शान्तिकर्मणि साधयिष्यामः॥ (३)

[1] L. समन्त्रकमन्त्रकं.

देवताश्चोपांशुयाजेन्द्रमहेन्द्रवर्जम् ॥

देवताश्च दर्शपूर्णमासाभ्यां व्याख्याता: । तद्व्यपदेशात्सर्वा देवता:[1] प्राप्नुवन्ति । तत्र प्रतिषेध: । उपांशुयाजं[2] वर्जयित्वा इन्द्रं महेन्द्रं च इति[3] । तेन पौर्णमास्यामग्नि: अग्नीषोमौ च । एवममावास्यायामग्नि: इन्द्राग्नी च । एवं द्वे देवते[4] भवत: । अथात्र विचार: क्रियते । इन्द्रमहेन्द्रयो: प्रतिषेधो न वक्तव्य: । कस्मात् । सामान्याभावात् । नेत्युच्यते । सन्नयत एते देवते भवत: । तत्र सन्नयन् इति कर्ता निर्दिश्यते[5] । त्रेतायामसौ सन्नयन्निहापि सन्नयन्नेव भवति । तेनेन्द्रो महेन्द्रो वा विकल्पेन प्राप्नोति । तस्मात्प्रतिषेध: कर्तव्य: । यद्येवं असन्नयत[6] इन्द्राग्न्यपि तेन प्राप्नोति । कस्मात् । असन्नयत इति वचनात् । तस्मात् अग्निरेवैक:[7] प्राप्नोतीति । नेत्युच्यते । इन्द्राग्नी द्वितीया[8] देवता भवत्येव । कथम् । असन्नयतीत्येवं कृत्वा । कथमसौ असन्नयन् भवति । देवताप्रतिषेधात् । तदभावे सान्नाय्याभावात् । कस्मात् । भोक्त्रीति देवताभोज्यं सान्नाय्यम् । भोक्त्रभावे भोज्याभाव: । तस्मा- दर्थात्सान्नाय्यम् । कथम् । असन्नयतीत्येवं कृत्वा । कथम् । 'प्रतिषिद्धं सान्नाय्यम् । प्रतिषेधे वा सन्नयनं भवति । तस्मादसन्नयत इन्द्राग्नी भवत: ॥

[1] L. omits देवता:

[2] A. L. have च after this word.

[3] A. इन्द्रमाहेन्द्रो वेति. L. इदं महेन्द्रं चति.

[4] L. दैवते.

[5] L. निर्देश्ते.

[6] L. यद्यवमसन्नयन.

[7] L. अग्निरेक:

[8] A. द्विपाती.

देवताश्च ताभ्यां व्याख्याताः। उपांशुयाजादिवर्जम्। तेनाग्निरग्नीषोमौ पौर्णमास्यां अग्निरिन्द्राग्नी अमावास्यायाम्। तदुक्तं शौनकेन।

पौर्णमासी न सम्प्राप्ताथ विवाहादनन्तरम्।
ततः प्रक्रम्य कुर्वीत स्थालीपाकं तु कर्मसु।
तत्र यद्यप्यमावास्या विवाहानन्तरं यदा॥
तथापि पौर्णमास्यादिस्थालीपाकक्रिया स्मृता

अथेन्द्रमहेन्द्रयोर्निषेधः किमर्थः। सन्नयत एव हि ते विहिते। इन्द्रं महेन्द्रं वा सन्नयत इति। न चात्र सान्नाय्यं विहितम्। उच्यते। गृह्यकर्माणि तावदाहिताग्नेरपीष्यन्ते अर्धाधाने औपासनाग्नौ। सर्वाधाने तु कर्मणि कर्मणि पुनः संस्कुर्यात्। सन्नयत इति कर्तृविशेषणम्। दर्शे चासौ सन्नयन् भवति सोमेनेष्टवांश्चेत्। तेनात्रापि तस्य प्राप्तुतः। तस्मात् निषेधः। तर्हि इन्द्राग्नी न स्यातां असन्नयत इतिवचनात्। उच्यते। इन्द्राग्नी अस्यापि देवता भवत्येव। अत्र ह्यसावसन्नयन्निति कृत्वा। न चात्राभावः कर्तृविशेषणम्॥ (४)

**काम्या इतराः॥**

काम्या इतरा देवता भवन्ति। उक्ताभ्यो या अन्या उपांश्वाद्याः। तत्र संशयः। किमन्या अभिधीयन्ते[1]। आहोस्विदुपांश्वाद्या इति। उभयथाप्यपार्थकम्। कथम्[2]। अथ काम्यानां स्थाने इति वक्ष्यति[3]। नेत्युच्यते। उपांश्वादीनां प्रतिषेधः कृतः। तेन सर्वत्रैव प्रतिषेधः स्यात्। इत्यत इदमारभ्यते। किमित्युच्यते। अथ काम्यानामित्यविशिष्टं वचनम्। तेन काम्या भविष्यन्ति। तस्मादप्रयोजनम्। एवं तर्हि कामसांयोगेन पार्वणेन कथं प्रयोगः स्यादित्येवमर्थं वचनम्। अथ प्रयोगे सति इन्द्रो महेन्द्रो वा

[1] A. किमन्यामिधीयते. L. किमन्याभिधायन्ते.

[2] L. omits कथम्.

[3] L. वक्ष्यते.

केन द्रव्येण यष्टव्यः[1] । तत्र संशयः । सान्नाय्ये न[2] प्राप्नोति । तथा दृष्टत्वात् । नेत्युच्यते । इह स्थालीपाकेन यागः कर्तव्यः सान्नाय्याभावात् । अथोपांशुयाजस्यापि चरुः प्राप्नोति । नेत्युच्यते । आज्येनैवोपांशुयागः कर्तव्यः । कस्मात् । आज्यस्य विद्यमानत्वात् ॥

उक्ताभ्योऽन्या या उपांशुयाजाद्या देवताः ताः काम्या भवन्ति । कामे सति कर्तव्या इत्यर्थः । विष्णुं बुभूषन् यजेत इत्येवमाद्याः काम्याः । अथ काम्यानां स्थाने इत्येव सिद्धे उपांशुयाजादीनामपि निषेधः कृतः । तच्चात्र काम्यत्वेनापि न क्रियेरन्निति भ्रान्तिः स्यात् । तन्निवृत्त्यर्थमिदं वचनम् । अथात्र किं द्रव्यम् । उपांशुयाजस्य तावदाज्यम् । तस्य विद्यमानत्वात् दृष्टत्वाच्च । इन्द्रमहेन्द्रयोस्तु चरुः सान्नाय्याभावात् ॥ (९)

**तस्यै तस्यै देवतायै चतुरश्चतुरो मुष्टीन्निर्वपति पवित्रे अन्तर्द्धायामुष्मै त्वा जुष्टं निर्वपामीति ॥**

तस्यै तस्यै इति वीप्सा क्रियते । चतुरश्चतुर इति एषा वीप्सा । मुष्टीनिति परिमाणार्थो[3] निर्देशः । निर्वपतीति क्रिया चोद्यते[4] । पवित्रे प्रागुक्ते । अन्तर्धाय अमुष्यै त्वा जुष्टं निर्वपामि इत्यनेन मन्त्रेण । तत्रामुष्मै इति स्थाने विभक्त्यर्थो[5] निर्देशः सर्वनाम्ना ॥

प्रणीताप्रणयनोत्तरकालं शूर्पे पवित्रे अन्तर्द्धाय व्रीहीन् यवान् वा असम्भवे अन्यान् वा होम्यान् एकैकस्यै देवतायै चतुरश्चतुरो मुष्टीन्

[1] A. L. यष्टव्यो.

[2] A. मा instead of न.

[3] L. परिभाषार्थो.

[4] Here L has श्रीलक्ष्मीनारायणार्पणमस्तु.

[5] A. स्थाने विभक्त्यर्थो. L. स्थानाविभक्त्यर्थो.

निर्वपति अमुष्मै त्वा जुष्टं निर्वपामि इति। अमुष्मैशब्दस्य स्थाने चतुर्थ्या विभक्त्या देवतां निर्दिशेत्। चतुरश्चतुर इति वीप्सावचनं एकैकस्यै देवतायै चतुर्मुष्टिप्राप्त्यर्थम्। पवित्रे व्याख्याते॥ (६)

**अथैनान् प्रोक्षति यथानिरुप्तममुष्मै त्वा जुष्टं प्रोक्षामीति॥**

अथशब्दः प्रयुज्यते कथं सर्वेषु निरुप्तेषु प्रोक्षणं स्यादिति। तत्र निर्वपणप्रोक्षणे एकस्मिन्नेव पात्रे भवतः न[1] नानापात्रयोरिति। कुत एतत्। उत्तरत्र विभागदर्शनात्[2]। यथाशब्दः प्रकारवाची। येन प्रकारेण निर्वापस्त-तस्तेन प्रकारेण प्रोक्षणमपि[3] कर्तव्यम्। केन पुनः प्रकारेण निर्वपणं कृतम्। तस्यै तस्यै चतुरश्चतुरः पवित्रे अन्तर्धायेति। प्रोक्षणेऽपि सर्वोऽयं विधिः प्रसज्येत॥

अथशब्दः कथम्। सर्वासामेव देवतानां निरुप्तेषु प्रोक्षणं स्यादित्ये-वमर्थम्। एनानिति बहुवचनं संश्लिष्टानेव प्रोक्षेत् न विभज्येत्येवमर्थम्। यथानिरुप्तमिति तस्यै तस्यै देवतायै चत्वारि चत्वारि प्रोक्षणानि समन्त्रकेषु निर्वापेषु समन्त्रकाणि अमन्त्रकेष्वमन्त्रकाणि पवित्रे अन्तर्द्धाय कुर्यादित्येवमर्थम्। निर्वापप्रोक्षणे एकस्मिन्नेव पात्रे भवतः उत्तरत्र विधानात्॥ (७)

**अवहतान् त्रिष्फलीकृतान्नाना श्रपयेत्॥**

अवहननं कृत्वा अथ त्रिः फलीकरणं करोति। फलीकरणं नाम[4] अतुषकरणं विप्रमोकः। शुक्लीकृतानित्यर्थः। तत्रार्थात् त्रिः फलीकरणं संभवति। नाना श्रपयेत्[5]। नाना न सहेत्यर्थः॥

[1] L. omits न.
[2] L. विभात्यदर्शनात्.
[3] L. omits प्रोक्षणमपि.
[4] A. omits फलीकरणं नाम.
[5] L. has इति after this.

कृष्णाजिने उलूखलं कृत्वा पत्न्यवहन्यात्। त्रिष्फलीकृतानिति त्रिः शुद्धीकृतानित्यर्थः। पिण्डपितृयज्ञे सकृत् प्रक्षाल्येति सकृद्ग्रहणादत्र त्रिः प्रक्षाल्येत्। ततो नाना श्रपयेत्॥ (८)

**समोप्य वा॥**

एकत्र वा श्रपणं भवति॥

एकत्र वा श्रपयेत्॥ (९)

**यदि नाना श्रपयेद्विभज्य तण्डुलानभिमृशेदिदममुष्मा इदममुष्मा इति॥**

यदीत्यनित्यार्थे। यदि नाना श्रपणं भवति। ततस्तण्डुलान् विभज्य अभिमृशेत् इदममुष्मै इति॥

यदि पृथक् श्रपयेत् तथा सति तण्डुलानभिमृशेत्। इदममुष्मा इदममुष्मा इति। अमुष्मैशब्दः पूर्ववत्॥ (१०)

**यद्यु वै समोप्य व्युद्धारं जुहुयात्॥**

यदि समोप्य श्रपयति व्युद्धारं जुहुयात्। उद्धृत्य[1] नाना पात्रेषु पृथक् कृत्वेत्यर्थः। व्युद्धारं कृत्वा अभिमृश्य जुहुयात्। जुहुयादिति न[2] वक्तव्यम्। कस्मात्। उत्तरत्र होमं वक्ष्यति[3]। ब्रवीति। जुहुयात् इति उच्यते कथं होमकालेऽप्युद्धारः स्यादिति[4]॥

[1] L. repeats this word. A. has उद्धृत्य व्युद्धारं.

[2] L. omits न.

[3] A. वक्ष्यते.

[4] Here L. has श्रीलक्ष्मीनारायणार्पणमस्तु.

यदि समोप्य श्रपयेत् तथा सति चरुं व्युद्धृत्य एवमभिमृश्य ततो जुहुयात् । व्युद्धारमिति व्युद्धृत्येत्यर्थः । व्युद्धरणं नाम पात्रान्तरे पृथक्करणम् । जुहुयादिति वचनं होमकाले व्युद्धरेदित्येवमर्थम् ॥ (११)

**श्रृतानि हवींष्यभिघार्योदगुद्वास्य बर्हिष्यासाद्येध्ममभिघार्य अयं त इध्म आत्मा जातवेदस्तेनेध्यस्व वर्द्धस्व चेद्ध वर्द्धय चास्मान् प्रजया पशुभिर्ब्रह्मवर्चसेनान्नाद्येन समेधय स्वाहा इति ॥**

श्रृतानि पक्वानि । श्रृतमात्राणि । नाप्यश्रृतानि नापि दग्धानीत्यर्थः । अभिघार्योदगुद्वास्येति पाठः । उदङ्ङुद्वास्येत्येवं[1] पाठ्यमाने उदङ्मुखस्य उद्वासनं प्राप्नोति । न चेष्टम् । तस्मादुदगुद्वास्येति पाठः क्रियते । बर्हिष्यासाद्येति । तत्र केचिदेतस्मिन्[2] काले बर्हिष आस्तरणं कुर्वन्ति । केचित्पूर्वास्तृते एव बर्हिःशब्दं कल्पयन्ति । एतस्मिन् काले पुनरभिघारणमिच्छन्ति । इध्ममभिघार्य अयं त इध्म आत्मा इत्यनेन मन्त्रेण जुहुयात्[3] ॥

उत्तरतोऽग्नेराज्यमुत्पूयाग्निः पश्चात् बर्हिरास्तीर्याज्यमासाद्य ततः श्रृतानि हवींष्यभिघार्योदगुद्वास्य बर्हिष्यासाद्य तत इध्ममभिघार्य अयन्त इति मन्त्रेणाग्नावादध्यात् । बर्हिष्यासाद्य पुनरभिघार्येति केचित् पठन्ति ॥ (१२)

**तूष्णीमाघारावाघार्याज्यभागौ जुहुयात् अग्नये स्वाहा सोमाय स्वाहा इति ॥**

[1] L. उद्वास्य तं.

[2] L. केचित् तस्मिन्.

[3] A. L. have अभ्यादधाति after this.

तूष्णीमिति मन्त्रप्रतिषेधोऽपार्थकः । कस्मात् । अनुपदेशान्मन्त्रस्य । ब्रवीति । तूष्णींग्रहणं कुर्वन्नेतत् ज्ञापयति[1] । मन्त्रवर्जिता येऽन्ये आघारधर्मास्तेषां यथा प्रवृत्तिः स्यादिति । के पुनस्ते धर्माः । पात्रं देवता[2] इत्येवमादयः । आज्यभागाविति उत्तरयोराहुत्योः संज्ञा प्रयोजनम् । तथाज्यभागौ पाकयज्ञे ॥

तूष्णींग्रहणं मन्त्रवर्जम् । अन्ये धर्माः शास्त्रान्तरदृष्टाः कथं प्रवर्तेरन्निति । उत्तरपश्चिमाया आरभ्य दक्षिणपूर्वां प्रति अविच्छिन्नामाज्यधारां हरेत् । तथा दक्षिणपश्चिमाया आरभ्य उत्तरपूर्वां प्रत्याघारयेत् । स्रुवेणोभौ जुहुयात् । कुतः । यत्राज्यहोमे साधनान्तरानुपदेशस्तत्र स्रुवेण होम इति साधितं 'एवम्भूतोऽव्यक्तहोम' इति सूत्रे व्याख्यातृभिः । यावन्मात्रं स्वशास्त्रानुक्तं अपेक्षितं तावन्मात्रं ग्राह्यम् । न तु स्वशास्त्रे उक्तमपि । आज्यभागौ जुहुयादग्नये स्वाहा सोमाय स्वाहा इति । आज्यभागावित्यनयोर्यागयोः संज्ञा ॥ (१३)

**उत्तरमाग्नेयं दक्षिणं सौम्यम् ॥**

किमर्थमनयोर्देशो विधीयते[3] । देशविधानकारणम् । उत्तरमारभ्यते ॥

अग्नेरुत्तरपार्श्वे आग्नेयमाज्यभागं जुहुयात् । दक्षिणपार्श्वे तु सौम्यम् । स्रुवेणोभौ जुहुयात् पूर्ववत् ॥ (१४)

**विज्ञायते चक्षुषी वा एते यज्ञस्य यदाज्यभागौ ॥**

[1] L. कुर्वन्नेतदा ज्ञापयते. A. कुर्वन्नेतत् ज्ञापयते.

[2] A. L. देव instead of देवता.

[3] A. विधीविधीयते.

विज्ञायते इति ब्राह्मणम् । ब्राह्मणादिदमाकृष्यते । अत्र किमर्थं ब्राह्मणवाक्यमन्त्रा इष्यन्ते[1] । यथान्येषु विधिषु मन्त्राः तथा ब्राह्मणवाक्यमन्त्राकर्षः क्रियत इति । अत्र श्रुतिवाक्येनाज्यभागयोः दक्षिणसंस्थताविधानेन ज्ञापयति । अन्यत्रोदक्संस्थता प्राक्संस्थता वा भवति । इहापि[2] उदक्संस्थता[3] प्रथमं सौम्यो हीयतामिति । अथाप्युत्तरमारभ्यते ॥

आज्यभागौ यज्ञस्य चक्षुषी इत्येवं श्रूयत इत्यर्थः । ततः किमित्याह ॥ (१५)

**तस्मात् पुरुषस्य हि प्रत्यङ्मुखस्यासीनस्य दक्षिणमक्ष्युत्तरं भवत्युत्तरं दक्षिणम् ॥**

आग्नेयश्चाज्यभागो दक्षिणमक्षि भवति[4] । तस्मान्न शक्यते आग्नेयं पश्चाद्धोतुम्[5] । अग्नये स्वाहेति पूर्वोपदिष्टत्वात् ॥

यज्ञपुरुषस्य हि प्रत्यङ्मुखस्यासीनस्य दक्षिणमक्ष्युत्तरं भवत्युत्तरं दक्षिणम् । तस्मात् दक्षिणसंस्थैव शक्या कर्तुम् । नोदक्संस्थेत्यर्थः । श्रुत्याकर्षोऽन्यत्र क्वचिदुदक्संस्थतापि यथा स्यादिति । तेन बलिहरणे प्रधानानामुत्तरतः पुरुषेभ्यो बलिहरणं सिद्धम् ॥ (१६)

**मध्ये हवींषि प्रत्यक्तरं वा प्राक्संस्थान्युदक्संस्थानि वोत्तरपुरस्तात् सौविष्टकृतम् ॥**

[1] A. इष्यता L. इष्यते.

[2] A. Omits ज्ञापयति अन्यत्रोदक्संस्थता प्राक्संस्थता वा भवति । इ.

[3] A. उदक्संस्थतासु.

[4] L. दक्षिणमक्षिर्भवति.

[5] A. L. पश्चाद्धेतुम्.

आज्यभागयोर्वचनम् । प्रत्यक्तरमिति पश्चिमोत्तरं इत्यर्थः । प्राक्संस्थानि वा हवींषि उदक्संस्थानि वा भवन्ति । तदिदं न वक्तव्यम् । सिद्धत्वात् । नेत्युच्यते । यदि नारभ्येत हवींषि इति मध्याधिकारोऽनुवर्तते । तस्मादारब्धव्यम् । अथात्र संशयः । किमेकैका आहुतिरुदक्संस्था भवति आहोस्वित्सर्वा[1] आहुतयः उदक्संस्था भवन्ति । तत्र सर्वासामाहुतीनामुदक्संस्थता भवति । तत्र उत्तरपूर्वे देशे सौविष्टकृतं जुहोति ॥

अग्नेर्मध्यप्रदेशे हवींषि जुहोति । प्रत्यक्तरं वा देशे हवींषि वा जुहोति । प्रत्यक्तरमिति द्वितीया सप्तम्यर्थे । तत्रापि देशे प्राक्संस्थानि वा जुहोति उदक्संस्थानि वा । ननु प्राक्संस्थानीत्यस्मिन्नसत्यपि उदक्संस्थानि वेति वाशब्दप्राप्तया प्राक्संस्थया सह विकल्पे सति पक्षे प्राक्संस्थत्वमपि सिध्यति । किमर्थं प्राक्संस्थवचनम् । उच्यते । देशद्वयस्य संस्थाद्वयस्य चानन्तर्ययोगो मा भूदित्येवमर्थम् । तेन देशद्वयेऽपि संस्थाद्वयस्य यथासङ्ख्यता नास्तीति सिद्धम् । अग्नेरुत्तरपूर्वदेशे सौविष्टकृतं हविर्जुहोति ॥ (१७)

**मध्यात् पूर्वार्धाच्च हविषोऽवद्यति ॥**

हविषः मध्यात् पूर्वार्धाच्च[2] अवद्यति ॥

हविषो मध्यात् पूर्वार्धाच्चाङ्गुष्ठपर्वमात्रं हविरवद्यतीति देशो नियम्यते ॥ (१८)

**मध्यात् पूर्वार्धात् पश्चार्धादिति पञ्चावत्तीनाम् ॥**

अयमवदानक्रमो भवति । तत्र पश्चार्धाच्चेति न[3] वक्तव्यम् । एवमुच्यमाने सिध्यत्यर्थः । क्रमस्तु न सिध्यति । प्राक् संस्थतोदक्संस्थ-

[1] L. अहोस्वित्सर्वा.

[2] A. पूर्वाच.

[3] A. L. Omit न.

तानियमात्[1] । तेन क्रमार्थमिदं वचनम् । कथमनेन क्रमेणावदानानां ग्रहणं स्यादित्यतो वचनमारभ्यते ॥

पञ्चावत्तीनान्तु मध्यात् पूर्वार्धात् पश्चार्धादित्येवमवदानं भवति । पश्चार्धाच्चेत्येतावतैव सिद्धे मध्यात् पूर्वार्धादिति वचनं प्रत्यक्संस्थता यथा स्यात् । प्राक्संस्थता मा भूदित्येवमर्थम् ॥ (१९)

· उत्तरार्धात् सौविष्टकृतम् ॥

अथ[2] अवदानमवद्यति । अथात्र संशयः । किं विवक्षितमेकवचनं उताविवक्षितमिति । उच्यते । विवक्षितमेकवचनं उपदेशात् । नेत्युच्यते[3] । विवक्षिते एकवचने दोषः प्राप्नोति । को दोषः । चतुरवत्तीनां न प्राप्नोति । कथम् । उपस्तरणमवदाने प्रत्यभिघारणमिति । नायं दोषः । कथम् । द्विः प्रत्यभिघारणं करोति[4] । एवमपि पञ्चावर्त्तीनां चतुरवत्तता[5] प्राप्नोति । द्विः प्रत्यभिघारणं करिष्यते[6] इति विहितत्वात् । कस्मात् । त्रिरभिघारणस्याविहितत्वात् । तेनैष दोषः प्राप्नोति एकवचने प्रतीयमाने[7] । न सौविष्टकृतमिति जातिवाचकोऽयं शब्दः । तस्मादुत्तरार्धगताद्धविषः पूर्वोक्तेनावदानधर्मेण स्विष्टकृतोऽप्यवदानानि[8] गृह्णाति । अनेनैव मन्त्रेण स्विष्टकृद्धोतव्यः ॥

[1] A. प्राक्संस्थतादक् संस्थता नियमात्. L. प्राक्संस्थतोदक् संस्थतो नियमात् .

[2] L. Omits अथ.

[3] A. L. Omit नेति.

[4] L. करिष्यति.

[5] A. L. चतुरवत्तीनां.

[6] A. has च before करिष्यते.

[7] A. L. प्रतीयते.

[8] A. L. स्विष्टकृत्यन्यवदानानि.

सर्वेषां हविषामुत्तरार्धात् स्विष्टकृदर्थमवदानं प्रधानादवदानात् भूयः सकृत् सकृदवखण्डयति। पञ्चावत्तीनां तु एवम्। सकृत् सकृद्गृहीत्वा पुनरपि पूर्वावदानदेशस्य पुरस्तात् सकृत् सकृदवद्येत्। तथा दृष्टत्वात्। ततो द्विरुपरिष्टादभिघारयति पञ्चावत्ती चतुरवत्ती च ॥ (२०)

**नात्र हवींषि प्रत्यभिघारयति। स्विष्टकृतं द्विरभिघारयति ॥**

अत्र तु अस्मिन् स्विष्टकृति हवींषि न प्रत्यभिघारयति। अत्रग्रहणमपार्थकम्। कस्मात्। अधिकारात्। नेत्युच्यते। न[1] हवींषि प्रत्यभिघारयतीत्येवमुच्यमाने सर्वत्र प्रत्यभिघारणप्रतिषेधः स्यात्। तस्मादत्रग्रहणं क्रियते ॥

स्विष्टकृति हविःशेषं न प्रत्यभिघारयति। अत्रग्रहणमत्रैव नाभिघारयति न प्रधानहविःष्वित्येवमर्थम्। हविःशब्दः शेषे वर्तते। यद्यवत्ते वर्तेत चतुरवत्तताहुतेर्न स्यात्। तन्न चेष्यते ॥ (२१)

**यदस्य कर्मणोऽत्यरीरिचं यद्वा न्यूनमिहाकरम्। अग्निष्टत्स्विष्टकृत् विद्यात् सर्वं स्विष्टं सुहुतं करोतु मे। अग्नये स्विष्टकृते सुहुतहुते सर्वप्रायश्चित्ताहुतीनां कामानां समर्द्धयित्रे सर्वान्नः कामान् समर्द्धय स्वाहा इति[2] ॥**

अनेन मन्त्रेण स्विष्टकृतं जुहुयात् ॥ (२२)

**बर्हिषि पूर्णपात्रं निनयेत् ॥**

[1] L. नात्र.

[2] In Devasvāmin this comes before sutra 21. There is no commentary on this by him.

निषिञ्चेदित्यर्थः । एतत्पूर्णपात्रं प्रागेव पूरितं भवति । कथं गम्यते । तद्भूतोपदेशात् ॥

यत् पूर्वं निहितं पूर्णपात्रं तदधुना बर्हिषि निनयेत् । निषिञ्चेदित्यर्थः ॥ (२३).

एषोऽवभृथः ।

यदिदं पूर्णपात्रनिनयनं अयमवभृथः पाकयज्ञानां भवति । किं पुनः कारणम् । पूर्णपात्रनिनयनस्यावभृथत्वं[1] विधीयते । अवभृथसंस्कृतं[2] यथा स्यादिति । किं[3] प्रयोजनम् । अवभृथधर्माः कथं स्युरिति । के पुनस्ते धर्माः । कालोऽभ्युक्षणमित्येवमादयः । कः पुनरवभृथस्य कालः । ऊर्ध्वं सर्वप्रायश्चित्तेभ्यः प्राक् संस्थाजपात्[4] । कथं पुनरत्र सर्वप्रायश्चित्तानि भवन्ति । न भवन्ति । उच्यते[5] । अथ कस्य सर्वप्रायश्चित्तानि भवन्ति । कर्तुः । नेत्युच्यते । ब्रह्मणः । किमेतावदेव । नेत्युच्यते । निरसनोपवेशने[6] ब्रह्मजपः[7] सर्वप्रायश्चित्तानि संस्थाजप इतीमानि[8] पञ्च[9] कर्माणि ब्रह्मणो भवन्ति । किं सर्वत्र भवन्ति । नेत्युच्यते[10] । सत्यां प्रवृत्तौ ॥

[1] A. पूर्णपात्रनिनयस्यावभृथं. L. पूर्णपात्रनिनयस्यावभृथत्वं.

[2] A. L. अवभृथसंस्तुतं ; then there is the word यज्ञस्तु following.

[3] A. L. Omit किं.

[4] A. संस्थात्तपात्.

[5] L. न भवन्तीत्युच्यते. Something appears missing.

[6] A. L. निरसनोपवेशन.

[7] L. ब्रह्मणः जपः

[8] A. इतीमानि.

[9] A. L. Omit पञ्च.

[10] For भवन्ति । नेत्युच्यते. A. भवन्तीत्युच्यते. L. भवतीत्युच्यते.

यदिदं पूर्णपात्रनिनयनं एषोऽस्य कर्मणोऽवभृथो भवति। अवभृथवचनं अवभृथधर्मप्राप्त्यर्थम्। तेन कालोऽभ्युक्षणञ्च भवति। कालस्तु सर्वप्रायश्चित्तादूर्ध्वं प्राक् संस्थाजपात्। अनेनैवाभ्युपायेन सर्वप्रायश्चित्तानि संस्थाजपश्च कर्त्रा कार्याणीत्युक्तं भवति। निरसनोपवेशने ब्रह्मजपः सर्वप्रायश्चित्तानि संस्थाजप इति पञ्च ब्रह्मणो भवन्तीत्युक्तम्। तत्रैवं क्रमः। पूर्वं कर्ता सर्वप्रायश्चित्तानि जुहोति। ततो ब्रह्मा सर्वप्रायश्चित्तानि जुहयात्। ततः कर्ता पूर्णपात्रं निनयति। ततः कर्ता संस्थाजपेनोपतिष्ठते। ततो ब्रह्मोपतिष्ठते। ततः कर्ता परिसमूहनपर्युक्षणे इति। अभ्युक्षणञ्च आपो अस्मान् इदमापः सुमित्र्या नः इत्येतैर्मन्त्रैः ॥ (२४)

पाकयज्ञानामेतत् तन्त्रम् ॥

पाकयज्ञग्रहणं[1] नियमार्थम्। एतत्तन्त्रमिति[2] सर्वार्थम्। नेत्युच्यते। तेन[3] तत्रावदानावभृथोऽपि सर्वत्र स्यात्। न चेष्यते। क्व चेष्यते[4]। आज्यहोमेषु अवभृथवर्जं सर्वमन्यत्तन्त्रमिष्यते। उत्तराङ्गमपरे। पाकयज्ञवचनमाज्यहोमानां तन्त्रनिवृत्त्यर्थम्। तेन यावदुक्तमेव भवत्याज्यहोमेषु। तस्मात्पाकयज्ञाज्यहोमयोर्नानात्वं कल्पितं भवति। एकत्वमपरे। तदुक्तं प्राक्। अथ किमर्थं पाकयज्ञग्रहणं कर्तव्यं। सर्वपाकयज्ञाधिकारार्थम्। एतत्तन्त्रं सर्वपाकयज्ञानां वेदितव्यन्। अथ किं तन्त्रग्रहणेन[5] गृह्यते इति। उपवासादिविधानम्। उपवासो न भवति। तस्येति नियमितत्वात्। इध्माबर्हिषोरपि संनहनं प्राप्नोति। तस्येत्यधिकारात्। नानुवर्तिष्यतेऽधिकारः। नेत्युच्यते। यदि नानुवर्ततेऽधिकारः एवं सति देवता अपि सर्वत्र

[1] A. L. पाकयज्ञग्रहणनियमार्थं.

[2] There is वक्ष्यति before एतत्तन्त्रमिति in A. L.

[3] There is वक्ष्यति before तेन in A. L.

[4] A. L. चेष्यति.

[5] A. तत्र ग्रहणोन.

प्राप्नुवन्ति । नेत्युच्यते । नानुवर्ततेऽधिकारः । देवताश्च नान्यत्र भविष्यन्ति दर्शपूर्णमासवत् । तन्त्रग्रहणसामर्थ्यात्[1] प्रत्यक्षाविधानात् । देवतानामन्यत्र । तद्यथा । पौर्णमासीत्युपदेशे सति देवता न भवन्ति । एवमिहापि ॥

एतत् तन्त्रं पाकयज्ञानां सर्वेषां भवतीत्यर्थः । पाकयज्ञग्रहणं स्थालीपाकसदृशानां हुतानामेव तन्त्रं यथा स्यात् प्रहुतब्रह्मणिहुतानां मा भूदित्येवमर्थम् । अङ्गसंहतिस्तन्त्रं विध्यन्त इत्यर्थः । यद्यपि सर्वमुच्यते तथापि न प्रधानदेवताः प्रसज्यन्ति । देवतागमे नित्यानामपाय इति बाधदर्शनात् ॥ २५ ॥

हविरुच्छिष्टं दक्षिणा ॥

यद्धुतशिष्टं तदेव दक्षिणां[2] ददाति । दक्षिणाविधानान्मन्यामहे अन्यः कर्ता इति । स्वयंकर्तृत्वे सति दक्षिणादानं नोपपद्यते । अथ किं सर्वेषु पाकयज्ञेषु हविरुच्छिष्टं दक्षिणा भवति । नेत्युच्यते । अथ केषु भवति । उत्तरत्रैव वक्ष्यामः ॥

उच्छिष्टं हविर्दक्षिणां ददाति ब्रह्मणे यद्यस्ति ब्रह्मा । तदभावे ब्राह्मणेभ्यः । कर्माङ्गत्वाद्दक्षिणानाम् ॥ (२६)

इति प्रथमे दशमी कण्डिका

---

[1] A. तत्रग्रहणसामर्थ्यात्.

[2] A. दक्षिणा.

अथ पशुकल्पः ॥

अथ पशुकल्पो वक्ष्यते[1] । तत्रैके नित्यमिमं पशुं मन्यन्ते । योऽयं त्रेतायां षाण्मास्यः सांवत्सरो[2] वेति तस्य स्थाने एक[3] एवायं पशुरिति[4] । एवं सति कल्पग्रहणं[5] अपार्थकम् । अथ पशुरित्येतावता सिद्धम्[6] । अयं च पशुशब्दः पशुगुणके कर्मणि वर्तते । यथा सोमशब्दः सोमगुणके । इह नैवम्[7] । पशुरेवोपदिश्यते[8] । तस्योपदेशात् कल्प[9] इति । तेन कल्पग्रहणान्मन्यामहे यत्र यत्र पशुश्चोदितः तत्र तत्रानेनैव कल्पेन कथं क्रियते इति । तस्मात् कल्पमात्रमेवेदं न नित्यः पशुश्चोद्यत इति । क्व पुनः पशुश्चोद्यते । अष्टकायां शूलगवे चेति । यदि तदर्थं पशुकल्पविधानं[10] उपाकरणोपदेशोऽपार्थकः[11] । कथमुभयत्रोपाकरणं प्रतिषिध्यते । प्रोक्षणोपाकरणवर्जम् । प्रोक्षणादि समानं पशुना इति[12] । तस्मादुपाकरणोपदेशान्मन्यामहे नित्योऽप्यत्र पशुर्भवतीति । नेत्युच्यते । कल्पग्रहणान्न नित्यः पशुर्भवतीति । कल्पमात्रमेवाभिधीयते[13] । ननु चोपाकरणोपदेशान्म-

[1] A. वक्ष्येते.
[2] L. संवत्सरो.
[3] A. L. एके.
[4] L. पशुर्भवति.
[5] A. पशुकल्पग्रहणं.
[6] L. सिद्धेः
[7] A. L. तथा सोमगुणकेऽहनैव.
[8] A. L. पशुमेनोपदिश्यते.
[9] A. कल्पत.
[10] A. पशुकल्पविधानां.
[11] A. उपाकरणोपदेशोऽपोर्थकः
[12] A. पशुनति.
[13] A. कल्पमोच्यमेवाभिधीयते.

न्यामहे[1] नित्योऽप्यत्रापार्थकः[2]। नेत्युच्यते। उत्तरत्र काम्याः पशवो वक्ष्यन्ते[3] अथ काम्यानां इत्येतस्मिन्नधिकारे। तदुत्तरत्रैव साधयिष्यामः। यथा[4] आतिथ्ये कर्मणि पशुर्भवति तथा मधुपर्के उत्तरत्र वक्ष्यामः। अथशब्दोऽधिकारार्थः। पशुकल्पमधिकरोति ॥

उक्तोऽर्थः। अत्र पशोस्तन्त्रमात्रमुच्यते। न पुनः पशुर्विधीयते। कल्पग्रहणात्। एवं तर्ह्युपाकरणविधानमनर्थकं अष्टकाशूलगवयोः प्रतिषेधात्। प्रोक्षणोपाकरणवर्जं प्रोक्षणादि समानं पशुनेति। उच्यते। मधुपर्के ओं कुरुत इति यदा ब्रूयात् तदा अर्थवत्। अत्र ऋत्विजां बार्हस्पत्यः स्नातकस्यैन्द्राग्नः ऐन्द्रो राज्ञः आचार्यादीनामाग्नेयः प्रियस्य मैत्रः वरस्य प्राजापत्यः अतिथेराग्नावैश्वानरः इत्येवं शास्त्रान्तरे दृश्यते काम्यपशुषु चार्थवत् ॥ (१)

**उत्तरतोऽग्नेः शामित्रस्यायतनं कृत्वा पाययित्वा पशुमाप्लाव्य पुरस्तात् प्रत्यङ्मुखमवस्थाप्य अग्निं दूतं इति द्वाभ्यां हुत्वा सपलाशयार्द्रशाखया पश्चादुपस्पृशेत् अमुष्मै त्वा जुष्टमुपाकरोमि इति ॥**

उत्तरतः उदीच्यां दिशि[5]। कस्य। अग्नेः। शामित्रस्यायतनं कृत्वा। शामित्रो नामाग्निः[6]। तस्याग्नेरायतनं करोत्युत्तरतः। आयतनं नाम स्थानम्। अपः[7] पाययति। आप्लाव्य चैनं[8] पशुम्। पुरस्तात्[9] पूर्वस्यां

[1] L. चोपाकरणदेशान्मन्यामहे.

[2] A. L. नित्योऽप्यत्रपार्थकः

[3] A. L. वक्ष्यन्ति.

[4] A. L. तथा.

[5] A. L. उदीच्यां दिश्युत्तरतः for उत्तरतः उदीच्यां दिशि.

[6] L. नामाग्निः

[7] L. आपः

[8] L. चैतं.

[9] A. L. Omit the word.

*The Adyar Library Series No. 44*

General Editor:

G. SRINIVASA MURTI, B.A., B.L., M.B. & C.M., Vaidyaratna

*Director, Adyar Library*

# ĀS'VALĀYANA GṚHYA SŪTRA

## WITH TWO COMMENTARIES

## Vol. I—Adhyāya 1

दिशि। कस्य। अग्नेः। प्रत्यङ्मुखमवस्थाप्य। अग्निं दूतं इति द्वाभ्यां जुहोति। तत्रैतस्मिन् प्रतीके संशयः। किं कारणम्। अनेकऋग्गतत्वात्[1] प्रतीकस्य। कथम्। अग्निं दूतं वृणीमहे। अग्निं दूतं पुरो दधे। अग्निं दूतं प्रति यदब्रवीतन इति। अत एवमनेकऋग्गतत्वात् प्रतीकस्य[2] संशय इति। ब्रवीति। अविशेषवचने आदितः संप्रत्ययो भविष्यति। नाना प्राप्नोति। कस्मात्। कचिद्विशेषदर्शनात्। प्र द्यावा इति द्वैर्घतमसं इति। सुसंदृशं त्वा इति पङ्क्त्या। अप्सुमन्तौ गायत्रौ इति। एवं तर्ह्यन्ततः संप्रत्ययोऽस्तु। तथापि न प्राप्नोति। कस्मात्। विशेषदर्शनात्। तत्रापि प्र द्यावा इति वासिष्ठं इति। किं पुनरत्र प्रतिपत्तव्यम्। सामान्यनियमो भविष्यति। अस्ति पुनः किंचित् सामान्यम्। अस्तीति ब्रूमः[3]। तेन अग्निं दूतं वृणीमहे इत्ययमादेशः। कथं गम्यते। सूक्तादेः हीनपादग्रहणं दृष्टम्। तेन पादग्रहणस्य[4] सामान्यादिहापि सूक्तादौ ग्रहणं युक्तं ब्रवीति। यद्येवं द्वे सूक्ते प्राप्नुवतः[5]। कस्मात्। अग्निं दूतं इति द्वाभ्यां इत्येवं प्राप्नोति। नेत्युच्यते। यत्र च सूक्तादेर्ग्रहणे अनेकसूक्तमभिप्रेतं भवति तत्र हि यत्नान्तरमारभ्यते। यथा। उप प्रयन्त इति सूक्ते। इमे विप्रस्य इति सूक्ते। इति सूक्तग्रहणं करोति। तेनेह सत्यपि सूक्तादिग्रहणे नैव सूक्तद्वयं प्राप्नोति। यत्नान्तराभावात्। तस्मात् द्वाभ्यामृग्भ्यां इति प्रत्येतव्यम्। सामान्यात् सूक्तादौ च ग्रहणमिति। सपलाशयेति सपत्रयेत्यर्थः। आर्द्रशाखयेति शुष्कशाखया मा भूदिति। पश्चात् पृष्ठत इत्यर्थः। उपस्पृशेत् अन्वालभेदित्यर्थः। अमुष्मै त्वा जुष्टमुपाकरोमि इत्यनेन मन्त्रेण॥

[1] A. अनेकऋग्गजत्वात्.
[2] A. एवमनेक ऋत्का प्रतीते प्रतीकस्य. L. एवमनेकऋग्गतत्वात् प्रतीके.
[3] For अस्तीति ब्रूमः A. पूरवीति क्रमः L. पुंस्त्वीति ब्रूमः
[4] A. L. have इहापि before पादग्रहणस्य extra.
[5] A. प्राप्नुतः

आज्यभागान्तं कृत्वा उत्तरतोऽग्नेः शामित्रस्यायतनं कृत्वा ततः पशुं पाययित्वा ततः पशुमाप्लाव्य अग्नेः पुरस्तात् प्रत्यङ्मुखमवस्थाप्य ततः अग्निं दूतं इति द्वाभ्यां हुत्वा सपलाशया सपर्णया। आर्द्रशाखया अशुष्कशाखया। पश्चादिति पृष्ठदेशे। उपस्पृशेत् पशुं अमुष्मै त्वा इति मन्त्रेण। अमुष्मैशब्दः पूर्ववत्। अग्निं दूतं इत्यस्य प्रतीकस्य बहुगतत्वेऽपि हीनपादग्रहणसामर्थ्यात् सूक्तादेर्ग्रहणम्। तर्हि द्वे सूक्ते प्राप्नुतः। न। यत्र सूक्तद्वयमिच्छति तत्र सूक्ते इति करोति। यथा उप प्र यन्त इति सूक्ते इति। तस्मादृचौ भवत इति सिद्धम्॥ (२)

**व्रीहियवमतीभिरद्भिः पुरस्तात् प्रोक्षति अमुष्मै त्वा जुष्टं प्रोक्षामि इति॥**

व्रीहियवमिश्राभिरद्भिः[1] पुरस्तात् अग्नेः इत्यर्थः। प्रोक्षति। अमुष्मै त्वा जुष्टं प्रोक्षामि इत्यनेन मन्त्रेण[2]॥

व्रीहियवमिश्राभिरद्भिः पशुं पुरस्तात् अग्रतः प्रोक्षति। अमुष्मै त्वा इति मन्त्रेण॥ (३)

**तासां पाययित्वा दक्षिणमनु बाहुं शेषं निनयेत्॥**

तासां[3] यच्छेषं तद्दक्षिणं[4] बाहुं अनु निनयेत् निषिञ्चति। तासामिति ग्रहणं न कर्तव्यम्[5]। कस्मात्। अधिकृतत्वात्। नेत्युच्यते[6]। कर्तव्यं नित्यार्थम्। कथं नित्यं पायनं स्यादिति। इतरथा हि प्रोक्षण-

[1] L. व्रीहियवमतीभिरद्भिः

[2] Here L. has श्रीलक्ष्मीनारायणार्पणमस्तु.

[3] A. has बाहु and L. बहु extra after तासां.

[4] A. दक्षिणां.

[5] A. कर्तव्याम्.

[6] A. L. have only उच्यते and not न.

विशिष्टानामेव पायनं स्यात् इति। तत्र को दोषः। प्रोक्षणाभावे पायनस्याभावः। क्व। प्रोक्षणोपाकरणवर्जं इत्यत्र। तेन[1] प्रोक्षणाभावेऽपि पायनं यथा स्यादित्यतः तासामित्युच्यते ॥

तासां व्रीहियवमतीनामेकदेशं पशुं पाययित्वा दक्षिणं बाहुं अनु शेषं निषिञ्चेत्। तासांग्रहणं प्रोक्षणप्रतिषेधेऽपि अष्टकायां पायनं यथा स्यादित्येवमर्थम् ॥ (४)

## आवृतैव पर्यग्नि कृत्वोदञ्चं नयन्ति ॥

आवृतेति[2] तूष्णीम्। अमन्त्रकमित्यर्थः। मन्त्रप्रतिषेधोऽपार्थकः। कस्मात्। अनुपदेशान्मन्त्रस्य। ब्रवीति। अप्राप्तमन्त्रप्रतिषेधं[3] कुर्वते। तत् ज्ञापयति। समन्त्रस्य पर्यग्निकरणस्य ये धर्मास्ते कथं प्रवर्तेरन्[4] इति। अतो मन्त्रप्रतिषेधः क्रियते। के पुनस्ते धर्माः[5]। त्रिः पर्यग्नीकरोति। पश्वादीनां द्रव्याणां उदञ्चं नयन्ति। उदीच्यां दिशि नयन्ति ॥

आवृतैव पर्यग्नि कृत्वा पशुमुदञ्चं नयन्ति। आवृतैव तूष्णीमेवेत्यर्थः। मन्त्रप्रतिषेधो मन्त्रवर्जं अन्ये धर्मास्त्रेतायां दृष्टाः कथं स्युरिति। त्रिः पर्यग्निकरणादः ॥ (५)

## तस्य पुरस्तादुल्मुकं हरन्ति ॥

[1] A. इत्यत्रानेन.
[2] A. आवृ आवृतेति. L. आवृतमिति.
[3] L. अप्राप्तं मन्त्रप्रतिषेधं.
[4] A. L. प्रवृत्तेरन्.
[5] L. omits धर्माः

तस्य पशोः[1] पुरस्तात् अग्रत इत्यर्थः। उल्मुकमिति प्रदीप्तं काष्ठम्। तस्येति न वक्तव्यम्। कस्मात्। अधिकृतत्वात्। पुरस्ताद्धरन्तीत्युच्यमाने[2] संशयः स्यात्। पुरस्ताच्छब्दोऽनेकार्थः[3]। पूर्वदिग्वाची अग्रतोवाची प्रथमवाचीति[4]। एवं पुरस्ताच्छब्दस्यानेकार्थत्वात् तस्यग्रहणं क्रियते। कथमग्रतो हरणं स्यात्। नापि पूर्वं नापि[5] प्रथमम्। तस्योत्तरस्यैव[6] वक्तव्यम्॥

तस्य पशोः पुरस्तादग्रतः उल्मुकं प्रदीप्तं काष्ठं हरन्ति। तस्यग्रहणमग्रतो नयनं यथा स्यात् नापि पूर्वेण नापि प्रथममित्येवमर्थम्। अन्यथा पुरस्ताच्छब्दस्यानेकार्थत्वात् दिक्कालवाचिनोऽपि ग्रहणं स्यात्॥ (६)

**शामित्र एष भवति॥**

एषोऽग्निः शामित्रो भवति। तेन यस्मादयं[7] शामित्रः तस्मात्[8] तस्मिन्नायतने तस्य प्रतिष्ठापनं भवति। इति यत् तत्[9] प्रागुक्तम्[10]॥

[1] L. omits पशोः

[2] L. पुरस्ताद्धरन्तीपशोः माने.

[3] A. पुरस्ताच्छक्तोमनेकार्थ.

[4] A. has only प्रथमवाची.

[5] L. णापि.

[6] A. तस्यौत्तस्यैव. L. has च after this.

[7] L. तस्यादयं.

[8] A. L. omit तस्मात्.

[9] A. omits तत्.

[10] A. प्राक्कृतम्. L. has यत् कृतत्रा कृत for यत् तत् प्रायुक्तम् and then श्रीलक्ष्मीनारायणार्पणमस्तु.

एषोऽग्निः शामित्रो भवति । तस्मात् प्रागुक्ते शामित्रायतने तस्य प्रतिष्ठापनं भवति ॥ (७)

**वपाश्रपणीभ्यां कर्ता पशुमन्वारभते ॥**

तत्र वपाश्रपणयोः[1] सिद्धयोरुपदेशः । काष्मर्यमय्यौ[2] भवतः । तत्रैका सशाखा[3] । अन्या विशाखा[4] । ताभ्यां वपाश्रपणीभ्यां कर्ता पशुमन्वारभते । कः पुनः[5] कर्ता । यः कश्चित्समर्थः ॥

वपाश्रपण्यौ काष्मर्यमय्यौ भवतः । तत्रैका विशाखा अपरा सशाखा । ताभ्यां योऽस्य कर्मणः कर्ता अध्वर्युस्थानीयः स्यात् स पशुमन्वारभते ॥ (८)

**कर्तारं यजमानः ॥**

यजमानः कर्तारं अन्वारभते । यत्र यजमानशब्दो नोपपद्यते यजमान इव यजमानः ॥

अध्वर्युं यजमानोऽन्वारभते ॥ (९)

**पश्चाच्छामित्रस्य प्राक्शिरसं प्रत्यक्शिरसं वोदक्पादं संज्ञप्य पुरा नाभेस्तृणमन्तर्द्धाय वपामुत्खिद्य वपामवदाय वपाश्रपणीभ्यां परिगृह्याद्भिरभिषिच्य शामित्रे प्रताप्याग्रेणैनमग्निं हुत्वा दक्षिणत आसीनः श्रपयित्वा परीत्य जुहुयात् ॥**

[1] A. श्रपयोः
[2] A. कार्ष्मयैति. L. कार्ष्मयौनो.
[3] L. चशिखा.
[4] A. L. अविशाखा.
[5] A. omits पुनः

शामित्रस्य पश्चिमे देशे बर्हिरुपस्तीर्य[1] तदध्वर्युर्बर्हिरधस्तादुपास्यति इति सामर्थ्यात् । प्राक्शिरसं प्राच्यां दिशि शिरो यस्य[2] भवति तम्[3] । प्रतीच्यां दिशि शिरो यस्य भवति सोऽयं प्रत्यक्शिराः । तं प्रत्यक्शिरसं वा । उदक्पादम् । उदीच्यां दिशि पादा यस्य सोऽयं उदक्पादः । तमुदक्पादम् । संज्ञप्य मारयित्वेत्यर्थः । प्राक्शिरसं प्रत्यक्शिरसं[4] वेति न वक्तव्यम् । उदक्पादमित्येवं सिद्धत्वात् । न हि सिध्यति । उदक्पादश्च तावदसौ स्यात् । नापि[5] प्राक्शिरा नापि[6] प्रत्यक्शिराः[7] स्यात् । ऊर्ध्वशिरा माभूदिति कृत्वा अतः प्राक्शिरस्त्वं[8] प्रत्यक्शिरस्त्वं[9] च विधीयते। पुरा नाभेः अर्वागित्यर्थः । तृणमन्तर्धाय तृणमन्तर्दधाति । वपामुत्खिद्य उद्धृत्येत्यर्थः । वपामवदाय उद्धृत्येत्यर्थः[10] । अथ पुनर्वपाग्रहणं किमर्थम् । कृत्स्नावदानार्थम् । ननु चोपदेशादेव[11] कृत्स्नावदानता सिध्यति[12] । तेनेह यत्नेन कृत्स्नावदानतां साधयन् एतत् ज्ञापयति । अन्येष्ववदानेष्वकृत्स्नानि[13] ग्रहणानि[14] भवन्तीति । अवखिद्य वपाश्रपणीभ्यां परिगृह्णाति । परिगृह्याद्भि-

[1] L. बर्हिरापस्तीर्य.

[2] A. L. omit यस्य.

[3] A. L. omit तम् .

[4] A. omits प्रत्यक्शिरसं.

[5] L. omits from प्राक्शिरसं to नापि.

[6] L. नाम.

[7] A. प्राक्शिराः

[8] A. L. omit this word.

[9] L. प्रत्यक्शिरसंवा.

[10] A. L. only गृह्येत्यर्थः Perhaps उद्धृत्येर्थः would be a better reading.

[11] L. नन्वोपदेशादव.

[12] A. सिद्धेति. L. सिद्धति.

[13] L. अन्येष्ववदानेश्वकृत्स्नानि.

[14] ग्रहानि.

रभिषिञ्चति । अवसिच्य शामित्रे प्रतापयति । तत्र किमिदं प्रतापनं श्रपणार्थं आहोस्विद्धर्ममात्रमिति । तत्र धर्ममात्रमित्येवमुपदिशन्ति । किं कारणम् । उत्तरत्र श्रपणग्रहणात् । अग्रेणैनमग्निं[1] हुत्वा । तत्रैनमग्निमिति[2] । कतरोऽग्निर्निर्दिश्यते । उच्यते । औपासनः । कस्मात् । प्राधान्यात् । इतरस्य च संज्ञान्तरेण विहितत्वात् । दक्षिणत आसीनः श्रपयित्वा अस्यैवाग्नेः दक्षिणत आसीनः श्रपयति । तत्रार्थात् घृतपरिषेकः । श्रपयित्वा परीत्य जुहुयात् । उभावग्नी पर्यावर्तते अनेनैव यथा येनासावागतो[3] भवति । अमुष्मै इत्यनेन मन्त्रेण जुहोति ॥

शामित्रस्य पश्चिमे देशे बर्हिरुपस्तृणाति कर्ता । 'तं यत्र निहनिष्यन्तो भवन्ति तदध्वर्युर्बर्हिरधस्तादुपास्यति' इति श्रुतेः । ततस्तस्मिन् बर्हिषि प्राक्शिरसं प्रत्यक्शिरसं वा उदक्पादं पशुं सञ्ज्ञपयति शमिता । उदक्पादमित्येव सिद्धे प्राक्शिरसं प्रत्यक्शिरसं वेति वचनं ऊर्ध्वशिरसः संज्ञपनं मा भूदित्येवमर्थम् । ततः कर्ता पुरा नाभेरर्वाङ्नाभेर्दक्षिणतो नाभेरासीनो वपास्थानं ज्ञात्वा तत्र तृणमन्तर्धाय तिर्यक् छित्त्वा वपामुत्खिदेत् उद्धरेत् । वपास्थानं तु दक्षिणस्य पार्श्वस्य विविक्तप्रदेशः । यदि प्राक्शिराः संज्ञप्तः तथा सति दक्षिणं पार्श्वमुत्तानं कृत्वा तृणान्तर्धानादि कुर्यात् । ततो वपामवदाय अवखण्ड्य । पुनर्वपाग्रहणं कृत्स्नावदानार्थम् । तेनान्येष्ववदानेष्वकृत्स्नानि ग्रहणानि भवन्ति । ततो वपाश्रपणीभ्यां परिगृह्याद्भिरभिषिच्य प्रक्षाल्य शामित्रे प्रताप्य । प्रतापनं तु धर्ममात्रं श्रपणस्योत्तरत्र विधानात् । ततः शामित्रस्योत्तरतो गत्वाग्रेणैनमौपासनमग्निं वपां हुत्वास्य दक्षिणत आसीनः श्रपयित्वा श्रपयिता तां वपामभिघार्य बर्हिषि प्लक्षशाखासु निधाय उभावप्यग्नी यथागतं परीत्य जुहुयात् अमुष्मै स्वाहेति । वपाश्रपणकाले आज्येनावसिच्यावसिच्य श्रपयति

[1] A. अग्रेणोननमग्निं. L. अग्रेणैनमग्निं.

[2] L. has कः extra after this.

[3] L. येनावसावगतो.

'तामध्वर्युः स्रुवेणाभिघारयन्नाह' इति श्रुतेः। यद्यपि 'चतुरवत्ती यजमानः स्यादथ पञ्चावत्तैव वपा' इति श्रुतेर्वपा पञ्चावत्ता भवति। आज्यं हिरण्यशकलं वपा हिरण्यशकलमाज्यमिति। हिरण्याभावे तु द्विराज्यं ततो वपा पुनर्द्विराज्यमिति॥ (१०)

एतस्मिन्नेवाग्नौ स्थालीपाकं श्रपयन्ति॥

स्थालीपाकं श्रपयन्ति। एतस्मिन्नित्येतन्न[1] वक्तव्यम्। एतस्मिन्नित्यनुच्यमाने[2] कथमौपासने श्रपणं स्यादिति। ननु च स एवाधिकृतः[3]। सत्यप्यधिकारे नैव तत्र प्राप्नोति। कस्मात्। इतरस्य श्रपणार्थत्वात्। तस्मादेतस्मिन्नित्युच्यते॥

एतस्मिन्नेवौपासने एवाग्नौ पश्वङ्गत्वेन पशुदेवतायै स्थालीपाकं श्रपयन्ति। बहुवचनं कर्त्तुरनियमार्थम्। एतस्मिन्निति वचनं शामित्रे मा भूदित्येवमर्थम्। इतरथा शामित्रस्य श्रपणार्थत्वात्तस्मिन्नेव स्यात्॥ (११)

एकादश पशोरवदानानि सर्वाङ्गेभ्योऽवदाय शामित्रे श्रपयित्वा हृदयं शूले प्रताप्य स्थालीपाकस्याग्रतो जुहुयात्॥

एकादशावदानानि भवन्ति पशोः सर्वाङ्गेभ्यश्च। तत्र पशुग्रहणमपार्थकम्। कस्मात्। अधिकृतत्वात्। पशुग्रहणेन[4] नायं पशुर्गृह्यते। यो यस्तेतायां[5] पशुः तस्य यान्येकादशावदानानि[6] भवन्ति विहितानि तेषां

[1] A. L. श्रपयन्तीत्येतन्न; that is all.

[2] A. L. एतस्मिन्नित्युच्यमाने.

[3] L. omits स एवाधिकृतः

[4] A. पशुर्ग्रहणेन.

[5] L यं नेतायाम्.

[6] A. यान्यैकादशावदानानि.

ग्रहणं क्रियते । सर्वाङ्गेभ्य इति किमर्थम् । सर्वाङ्गेभ्यो ग्रहणं स्यादिति । इतरथा ह्यनियमः स्यात् । पशुग्रहणेनात्रावदानानां नियमः सिद्धः । तस्मात्सर्वाङ्गग्रहणं कर्तव्यम् । एवं तर्ह्येकादशेभ्योऽवदानेभ्यः कथमतिरिक्तानि विकल्पेन स्युरिति । अतः सर्वग्रहणं क्रियते । कानि पुनरङ्गानि सर्वाङ्गग्रहणेन गृह्यन्त इति । षड्विधो वै पुरुषः षळङ्ग इति षडङ्गानि गृह्यन्ते । बाहू ऊरू हृदयदेशः शिर इत्येतानि षड्विकल्पितानि भवन्ति[1] । एकादशानि तु नित्यानि । स्थालीपाकस्य प्रथमं जुहोति । यदा स्थालीपाकस्य[2]. पृथक् हृदये अवदानानि तदा तयोर्भेदात्[3] स्विष्टकृदपि भिद्यते । भेदे कारणमुत्तरत्र वक्ष्यामः । कस्मिन् स्थले । अथ श्वोभूतेऽष्टकाः पशुना स्थालीपाकेन चेत्यत्र[4] । हृदयं जिह्वा चक्षुर्वृक्कौ च दोश्च सव्यं वत्पार्श्वे दक्षिणा श्रोणिरन्त्रगुद इत्येकादश ॥

पशोर्ग्रहणं यानि त्रेतायां एकादशावदानानि पशोः प्रसिद्धानि तानि यथा स्युरित्येवमर्थम् । हृदयं जिह्वा वक्ष इत्येवमादीनि । सर्वाङ्गग्रहणमेकादशभ्योऽन्यान्यपि यान्यङ्गानि इष्टानि तेषामपि विकल्पेन ग्रहणार्थम् । एवमवदाय तानि शामित्रे श्रपयति । हृदयं शूले प्रोत्य प्रतापयति यथा शृतं भवति । ततः शृतान्यभिघार्योद्वास्य ततः स्थालीपाकस्यैकदेशं पूर्वं जुहुयात् ततोऽवदानानि ॥ (१२)

अवदानैर्वा सह ॥

अवदानैर्वा सह जुहोति स्थालीपाकस्याग्रतो वा पश्चादवदानानां न ॥

[1] A. omits भवन्ति.

[2] A. L. स्थालीपाकः

[3] A. L. तदाग्रतयोर्भेदात्.

[4] A. omits from कस्मिन् स्थले up to चेत्यत्र.

अवदानैर्वा सह स्थालीपाकं जुहोति न पृथक्। यदा तु पृथक् जुहोति तदा स्विष्टकृदपि पृथक् कार्यः ॥ (१३)

एकैकस्यावदानस्य द्विर्द्विरवद्यति ॥

एकैकस्यावदानस्य द्विर्द्विरवद्यति गृह्णाति। द्विर्द्विरवद्यतीति न वक्तव्यम्। सिद्धत्वात्। न सिध्यति। पूर्वेण सर्वस्य द्विरवदानं[1] न प्राप्नोति। कस्मात्। एकप्रदानत्वात्। सर्वेभ्यश्च द्विरवदानमिष्यते। तच्चान्तरेण यत्नं न सिद्ध्यतीत्यारभ्यते ॥

द्विर्ग्रहणं देशानियमार्थम्। एकैकस्यावदानस्य यस्मिन् कस्मिंश्चिद्देशे द्विर्द्विरवद्यति। पञ्चावत्ती तु त्रिस्त्रिरवद्यति। उपस्तरणप्रत्यभिघारणे कृत्वा जुहोति ॥ (१४)

आवृतैव हृदयशूलेन चरन्ति ॥

हृदयशूलेनावृता चरन्ति। आवृतेति मन्त्रप्रतिषेधः क्रियते। अप्राप्तस्य मन्त्रस्य कस्मात्प्रतिषेधः क्रियते। अन्येषां धर्माणां प्राप्त्यर्थम्। के पुनस्ते धर्माः। शुष्कार्द्रयोः समिद्धयोः[2] उद्वासनं उदकोपस्पर्शनं[3] समिद्ग्रहणमित्येवमादयः ॥

स्विष्टकृत्सर्वप्रायश्चित्तान्तं कृत्वा तूष्णीं हृदयशूलेन चरन्ति। आवृद्ग्रहणं मन्त्रवर्जमन्ये धर्मास्त्रेतायां दृष्टाः कथं स्युरित्येवमर्थम्। तेन शुष्कार्द्रयोः

[1] L. द्विर्द्विरवदानम्.

[2] L. सिद्धये.

[3] L. उदकोपपस्पर्शनम्.

सन्धिदेशे शूलस्योद्वासनं तस्योपरिष्टादप उपस्पर्शनम्। समिद्ग्रहणमुपस्थानं समिदाधानमित्येते कार्याः। ततः पूर्णपात्रनिनयनादि समापयेत्॥ (१९)

इति प्रथमे एकादशी कण्डिका

---

चैत्ययज्ञे प्राक् स्विष्टकृतश्चैत्याय बलिं हरेत्॥

चितौ भवश्चैत्यः। चैत्योऽस्य देवता चैत्यः। चैत्यश्चासौ यज्ञश्च चैत्ययज्ञः। तस्मिंश्चैत्ययज्ञे। एके एवं विग्रहं कुर्वन्ति। एवं सति चितिस्थाया एव देवताया यज्ञोऽयं प्राप्नोति। आकाशदेवताया न प्राप्नोति। इष्यते। निमित्तं वचननिर्दिष्टं[1] भवति। एवं सति अयमन्यो विग्रहोऽस्तु। चित्ते भवश्चैत्यः। इत्येवं[2] शाब्दस्तूपपादयितव्यः। एवं सति सर्वा देवताश्चैत्ये शक्यन्ते[3] कर्तुम्। अथ होमे का देवता अत्र भवतीत्युच्यते। चैत्यदेवतात्रेष्यते। यदि होमेऽपि सा चैत्यदेवता भवति चैत्याय बलिं हरेदिति चैत्यग्रहणमपार्थकं संपद्यते। तेन बलिहरणविधानान्मन्यामहे होमा न भवन्ति तस्माद्देवताया इति। अथ कस्य पुनरत्र होमो भवति। अग्न्यादीनां होमो भवति। अनादिष्टदेवतत्वात् नेत्युच्यते। सैव देवता भवति। कस्मात्। इष्टत्वात्। कथं पुनरिष्टो भवति। इह पुरुषः केनचिदर्थेन अर्थी सन् कस्यैचिद्देवतायै[4] प्रतिश्रृणोति अहं त्वामनेन यक्ष्ये इति। तस्मात्तेन सैव देवता यष्टव्या।

[1] A. निमित्तचननिर्दिष्टम्.

[2] L. only एवं instead of इत्येवम्.

[3] A. सर्वा देवताश्चैत्येत्रक्ष्यते.

[4] A. L. कस्यै देवतायै.

फलप्राप्तौ सत्यां तां देवतां यजति । केन पुनर्यजति । पशुना स्थालीपाकेन वा होमः कर्तव्यः । तस्यै देवतायै । ननु चैवं सति बलिहरणे चैत्यग्रहणमपार्थकम्[1] । नेत्युच्यते । तस्य प्रयोजनं वक्ष्यामः । प्राक् स्विष्टकृता इति बलिहरणं कृत्वा स्विष्टकृद्यथा स्यादिति । अथ बलिहरणे चैत्यग्रहणं कस्मात् । प्रत्यक्षहरणार्थम् । कथं वा प्रत्यक्षहरणं न स्यात् । उत्तरत्र सूत्रविरोधात् । तस्मादवश्यं चैत्यग्रहणं कर्तव्यम् । बलिहरणस्य प्राक् स्विष्टकृत उपदेशाच्च । अन्यत्रार्थे स्विष्टकृतः कर्माणि भवन्तीति सिद्धम्[2] । यथा हृदयदेशमस्य आलभेतेत्येवंप्रकाराणीत्येवमेके[3] । नेत्यपरे । प्रागेव स्विष्टकृतः कर्माणि भवन्ति । नन्वेवं सति बलिहरणकालोपदेशोऽपार्थकः प्राक्स्विष्टकृत इति । तत्र स्विष्टकृद्ग्रहणं न बलिहरणकालोपदेशार्थम् । किमर्थं तर्हि । चैत्ययज्ञे होमप्रदर्शनार्थम् । बलिहरणमात्रमेव तस्मिन् कर्मणि यज्ञशब्दादितिवत् होमोऽस्तीति । ननु बलिहरणमात्रेऽपि यज्ञशब्दस्य दृष्टत्वात् । तद्यथा भूतयज्ञ इति । तस्माद्धोमप्रदर्शनार्थं स्विष्टकृद्ग्रहणम् ॥

चित्ते भवाश्चैत्याः शङ्करः पशुपतिः आर्या ज्येष्ठा इत्येवमादयः । यदि कस्यैचिद्देवतायै प्रतिशृणोति । यदि आत्मनोऽभिप्रेतं वस्तु लब्धं ततस्त्वामहमाज्येन स्थालीपाकेन पशुना वा यक्ष्यामीति । ततो लब्धे वस्तुनि तस्य तेन यागं कुर्यात् । स चैत्ययज्ञः । तत्र स्विष्टकृतः प्राक् चैत्याय बलिं हरेत् नमस्कारान्तेन नामधेयेन । पुनश्चैत्यस्य ग्रहणं प्रत्यक्षहरणार्थम् । तेन चैत्यायतने एवोपलेपनादि कुर्यात् ॥ (१)

[1] A. has इति after this.

[2] A. तत्सिद्धम्.

[3] L. omits एवं before एके.

**यद्यु वै विदेशस्थं पलाशदूतेन यत्र वेत्थ वनस्पते इत्येतयर्चा द्वौ पिण्डौ कृत्वा वीवधेऽभ्याधाय दूताय प्रयच्छेदिमन्तस्मै बलिं हरेति चैनं ब्रूयादयं तुभ्यमिति यो दूताय ॥**

विदेशस्थं इति । विकृष्टो देशो विदेशः । यदि विदेशस्थं चैत्यं यजेत । उवा इति निपातादुत्तरेण संप्रयुज्यते[1] । यदि विदेशस्थः चैत्ययज्ञो भवति कथमस्मै[2] यष्टव्यः । तत्रोपायमारभते । पलाशदूतेन यत्र वेत्थ वनस्पते (ऋ. वे. ५. ५. १०) इत्येतयर्चा । अस्या ऋचः अभ्यासो यथा स्यादित्येवमर्थम् । क्व पुनरभ्यासः । सपिण्डीकरणे वीवधाभ्याधाने प्रतियच्छते इति । तेषु त्रिषु कर्मसु अभ्यासमिच्छन्ति यन्नकरणेन । द्वौ पिण्डौ कृत्वा वीवधेऽभ्यादधाति । अभ्याधाय दूताय प्रयच्छेत् । द्वयोः पिण्डयोरेकं पिण्डं निधाय इमं तस्मै[3] बलिं हरेत्येवेति चैनं[4] पलाशदूतं ब्रूयात् । द्वितीयं पिण्डं पलाशदूताय प्रयच्छति । अयं तुभ्यमिति । इमं[5] तस्मै बलिं हरेत्येतस्मिन् संप्रैषे विप्रतिपन्ना आचार्याः । किमिति । तस्मै इत्येतस्य स्थाने केचिद्देवतादेशं कुर्वन्ति । केचिन्न कुर्वन्ति । तेषां किं कारणम् । सर्वनामसामान्यात् । नेत्युच्यते । यत्राचार्यस्य नामादेशोऽभिप्रेतो भवति तत्रामुष्मै इत्येवमाह । तस्मात्तत्र नामादेशो न भवति । ये पुनरिच्छन्ति तेषां किं कारणम् । सर्वनामसामान्यात् । अमुष्मै इति वा ब्रूयात् । एवमुभयत्रापि प्रतिपन्नाः । अकरणमिति तु वचनेनोपदिशन्ति ॥

[1] A. संप्रयुज्येते ; L. प्रयुज्यते.

[2] L. कथमस्यै.

[3] From तस्मै till इमं below omitted in L.

[4] A. has only ए instead of चैनं.

[5] L. omits thus far.

यदि विदेशस्थं चैत्यं यजेत् तदा पलाशदूतेन बलिं हरेत । पलाशेन दूतं वीवधञ्च कुर्यात् । यत्र वेत्थ इत्यृचा द्वौ पिण्डौ कृत्वा वीवधेऽभ्याधाय दूताय प्रयच्छेत् । तयोरेकं पिण्डं निर्दिश्य दूतं वदति । इमं तस्मै बलिं हरेति । अपरं दूताय प्रयच्छति । अयं तुभ्यमिति । एतयर्चेति वचनं अन्यत्र पादग्रहणेऽपि क्वचित् सूक्तं भवतीत्येवमर्थम् । तेन आ त्वाहार्षमन्तरेधीति । ऋषभं मा समानानामिति च सूक्तं सिद्धम् । अन्ये पुनरभ्यासार्थं मन्यन्ते । पिण्डकरणे वीवधाभ्याधाने दूताय प्रदाने इति ॥ (२)

प्रतिभयं चेदन्तरा शस्त्रमपि किञ्चित् ॥

प्रतिभयं यद्यन्तराभवन्ति । कस्य अन्तरा । कर्तारं चैत्यं च । तत्र शस्त्रमपि किंचित् ददाति ॥

कर्तुश्चैत्यस्य च मध्ये भयमस्ति चेत् शस्त्रमपि किञ्चित् दद्यात् दूताय ॥ (३)

नाव्या चेत् नद्यन्तरा प्लवरूपमपि किञ्चिदनेन तरितव्यमिति ॥

नावार्हा नाव्या । नद्यन्तरा भवति । ततः प्लवरूपं किञ्चिद्ददाति । अनेन तरितव्यमित्यनेन मन्त्रेण ॥

उभयोर्मध्ये यदि नावा तार्या नदी स्यात् तदा प्लवरूपमपि किञ्चित् दद्यात् अनेनेति मन्त्रेण ॥ (४)

धन्वन्तरियज्ञे ब्रह्माणमग्निं चान्तरा पुरोहितायाग्रे बलिं हरेत् ॥

धन्वन्तरियज्ञश्चैत्ययज्ञः । तस्मिंश्चैत्ययज्ञे ब्रह्माणं च अग्निं च अन्तरा पुरोहितायाग्रे[2] बलिहरणं कर्तव्यम् । अग्रग्रहणा[illegible]

[1] A omits च.
[2] L. पुरोहिताग्रे.

द्धन्वन्तरये एव बलिहरणं[1] भवतीति । तच्चतुर्थम् । यदि विदेशस्थो धन्वन्तरिर्भवति तदा विशेषो भवति । पुरोहिताय बलिहरणं कृत्वा शेषं पूर्ववत् ॥

यदि धन्वन्तरिश्चैत्यो भवति तदा ब्रह्माणमग्निं चान्तरा पुरोहितायाग्रे बलिं हरेत् । पुरोहिताय नम इति । ततो धन्वन्तरये नम इति । धन्वन्तरौ विदेशस्थे त्वयं विशेषः । धन्वन्तरेश्च पुरोहितस्य चैकः पिण्डः । द्वितीयो दूताय ॥ (९)

इति प्रथमे द्वादशी कण्डिका

---

**उपनिषदि गर्भलम्भनं पुंसवनमनवलोभनञ्च ॥ १ ॥**

उपनिषन्नाम रहस्यम् । यदि तस्यामुपनिषदि गर्भलम्भनम् । गर्भो येन कर्मणा लभ्यते तत् गर्भलम्भनं नाम । तदुपनिषदि व्याख्यातम् । तत्र हि गर्भाधानादयः आत्मज्ञानान्ताः संस्कारा[2] आम्नाताः । अयमपि संस्कारः तत्रैवाम्नातः । यदि तत्राम्नातः किं कर्तव्यम् । येन प्रकारेण तत्राम्नातं तथा कर्तव्यम् । पुमान् येन संपद्यते लब्धो गर्भे[3] तत्पुंसवनं नाम । तदप्युपनिषद्येव व्याख्यातम्[4] । येनासौ गर्भः पुंसंस्कृतः सन् नावलभ्यते नावस्रस्यते इत्यर्थः । तदवलोभनं नाम । तदप्युपनिषद्येव व्याख्यातम् । एवमेतानि त्रीणि कर्माणि उपनिषदि यथाम्नातानि

[1] A. धन्वन्तराय बलिहरणं ; L. धन्वन्तरायैव बलिहरणं.

[2] A. reads it as तत्र हि आत्मज्ञानां गताः र्भाधानादय संस्कारा.

[3] A. L. गर्भः

[4] L. व्याख्यायते.

तथा[1] कर्तव्यानीति ब्रवीति । ननु चोपदेशादेवैषा क्रिया सिद्धयति । कस्मात्त्वस्यां[2] उपनिषदि नैतान्याम्नातानि । तेनान्यस्यामुपनिषद्याम्नातानामन्यस्य कथं प्रयोगः स्यादित्यत उपदेशः । उत्तरविवक्षार्थं वा उपदेशः ॥

आम्नातमिति शेषः । गर्भो लभ्यते येन कर्मणा निषिक्तं वीर्यममोघं भवति तद्गर्भलम्भनम् । पुमान् लब्धो जायते येन तत् पुंसवनम् । पुमांस्तु सन् येन नावलुप्यते तदनवलोभनम् । वर्णविकारो द्रष्टव्यः पृषोदरादिवात् । एतानि कस्यांचिदुपनिषदि आम्नातानि । न केवलमेतानि । किं तर्हि गर्भाधानादय आत्मज्ञानपर्यन्ता आम्नाताः । अस्मच्छाखायां सा न विद्यते । अतस्तत् कर्म कर्तव्यमित्युपदिश्यते ॥ १ ॥

तस्या उत्सन्नवात् यदि तां नाधीयात् तत एवं कुर्यादित्याह ।

**यदि नाधीयात् तृतीये गर्भमासे तिष्येणोपोषितायाः सरूपवत्साया गोर्दधनि द्वौ द्वौ माषौ यवञ्च दधि प्रसृतेन प्राशयेत् ॥ २ ॥**

तामुपनिषदं यदि नाधीयात्ततस्तस्या अपाठे किं कर्तव्यम् । उत्तरं कर्म । किं पुनस्तदिति उच्यते । तृतीये गर्भमासे प्रसृतेन प्राशयेत् । त्रयाणां पूरणस्तृतीयः । तस्मिन् तृतीये गर्भमासे अप्येतत्[3] कर्म भवति । यद्वक्ष्यामः तिष्येणोपोषितायाः इति[4] । अत्र संशयः । किं तिष्येणोपवासश्चोद्यते । आहोस्विदुपोषितायास्तिष्येण[5] कर्म भवतीति । तत्र तिष्येऽ[6]विशेषेण कर्म भवतीत्येषा प्रतिज्ञा । कथं पुनरेतत् ज्ञायते ।

[1] L. omits म्नातानि तथा.

[2] L. कस्मात्तस्यां.

[3] A. L. अप्येदं. The reading may as will be आपीदं.

[4] A. omits इति.

[5] A.ऽउषोषितास्तिष्येण.

[6] A. omits तिरष्ये.

गुणार्थश्चागुणार्थस्योपवासस्य । नक्षत्रस्य[1] गुणभूतत्वात् । गुणार्थस्य न गुणभूते सिद्ध्यतीति न्यायः[2] । तस्मात्कर्म तिष्येण भवति । उपवासस्तु पूर्वेण । सरूपवत्सायाः गोरिति[3] । समानं रूपं यस्याः वत्सेन सा समानवत्सा । तस्याः समानरूपवत्सायाः । कस्याः । गोः । गोग्रहणमपार्थकम् । कस्मात् । सरूपवत्साया दधतीत्युच्यमाने गोरेव संप्रत्ययो भवति । तस्मादविशेषोपदेशात् अन्यापि या समानरूपवत्सा[4] तस्या अपि ग्रहणं स्यात् । का पुनः सा । अजा । तेन अजाग्रहणं मा भूदित्यतो गोग्रहणं[5] क्रियते । तथापि न कर्तव्यम् । कस्मात्[6] । विद्यमानायां गवि कथमिव अजायाः प्रवृत्तिर्भविष्यतीति । ब्रवीति । स्यात्प्रवृत्तिः । कथम् । यदा गौरसमानरूपवत्सा[7] अजा च समानरूपवत्सा तस्या अग्रहणं स्यात् । तदा अजायाः प्रवृत्तिः स्यात् । तेन समानरूपवत्साया अभावे असमानरूपवत्साया[8] अपि स्यात् । इत्यतो गोग्रहणं क्रियते । द्वौ द्वौ माषाविति वीप्सा कस्मात् । बह्वर्थत्वात्[9] वीप्सायाः । प्रतिप्रसृतौ कथं द्वौ द्वौ माषौ स्यातामिति । नेत्युच्यते । वक्ष्यति एवं त्रीन् प्रसृतानिति । तस्माद्वीप्सा न कर्तव्या । नेत्युच्यते । कर्तव्या वीप्सा । यदि न क्रियते माषयोर्यवस्य च प्रसृतिविधानं न स्यात् । कस्मात् । सप्तम्युपदेशाद्द्ध्नः । यदि वीप्सा न क्रियते

[1] A. has च after this.

[2] A. सिध्यति न्यायः

[3] A. omits इति ; L. गोमिति.

[4] L. समानवत्सरूपः

[5] L. omits गो.

[6] A. कतस्मात् ; L. तस्मात.

[7] A. L. असमानवत्सरूपवत्सा.

[8] A. समानरूपवत्साया.

[9] A. नह्वर्थत्वात् .

तदा दधन्येव प्रक्षेपः स्यात् । माषयोर्यवस्य च वीप्सा कथम्[1] । प्रतिप्रसृति-संयोगार्थम् । एवं द्वौ द्वौ माषौ यवं च दधिप्रसृतेन प्राशयति । तत्र दधिग्रहणं न कर्तव्यम् । कस्यात् । उच्यते । पूर्वं दधिग्रहणं सप्तम्या निर्दिष्टम् । तेन दध्नः नः[2] प्राशनमेव न स्यात् । तेनावश्यं द्वितीयमुक्तं[3] दधिग्रहणं कर्तव्यम् । पुरस्तादेव द्वितीयासंप्रयोगस्तु सिद्धार्थः । माषयोर्यवस्य च दधनि प्रक्षेपो न स्यात् । इष्यते च । तस्मात्सप्तमीनिर्दिष्टमपि दधिग्रहणं अवश्यं कर्तव्यम्[4] । तस्मिन्न क्रियते यद्युपरिष्टाक्रियते प्राशनं न स्यात् । तस्मादुभयत्रारभ्यते ॥

गर्भाधानमाचार्येणानुक्तमिति कृत्वा न कार्यमित्येके । अन्ये पुनः शौनकाद्युक्तमार्गेण कार्यमित्याह । इदं तु पुंसवनम् । गर्भसहितो मासो गर्भमासः । तिष्येणेति नक्षत्रे च लुपि [पा० २. ३. ४५] इत्यधिकरणे तृतीया । तिष्येणेति प्राशनकर्मणा सम्बध्यते तस्य प्रधानत्वात् । नोपवासेन गुणत्वात् । तेन पुनर्वसुना उपोषितायाः पत्न्याः तिष्येणेदं कर्म करोति । तत्र प्राजापत्यस्य स्थालीपाकस्याज्यभागान्तं कृत्वा वक्ष्यमाणं कर्म कुर्यात् । समानं रूपं यस्य स सरुपः । सरूपो वत्सो यस्याः सा तथोक्ता । गोग्रहणं सरूपवत्साया अभावे असरूपवत्सा गौर्ग्राह्या नासरूपवत्सां त्यजेदित्येवमर्थम् । वीप्सावचनं कथम् । प्रतिप्रसृतं द्वौ द्वौ माषौ स्यातामिति । यदि वीप्सा न क्रियेत स्थालीस्थदधन्येव माषयोर्यवस्य च प्रक्षेपः स्यात् । तस्य सप्तमीनिर्दिष्टत्वात् । तस्मादावृत्त्यर्थं वीप्सावचनम् । पुनर्दधिग्रहणं दध्नः प्राशनार्थम् । अन्यथा पूर्वस्य सप्तमीनिर्दिष्टत्वात् दध्नः प्राशनं न स्यात् । प्रसृते दधि प्रक्षिप्य तस्मिन्दधनि माषयवानां प्रक्षेपणार्थं पूर्वं दधिग्रहणम् । अण्डरूपेण माषौ दद्यात् । शिश्नरूपेण यवम् । तथा दृष्टत्वात् (२)

[1] A. करणं instead of कथम्.

[2] A. तेतदध्निनः

[3] A. द्वितीयायुक्तं L. द्वितीयासुक्तं.

[4] A. दधिग्रहाणां यं कर्त अयं वक.

**किं पिबसि किं पिबसीति पृष्ट्वा पुंसवनं पुंसवनमिति त्रिः प्रतिजानीयात् ॥ ३ ॥**

यत्र यावत्प्रश्नः तत्र प्रतिप्रश्नेन भवितव्यम् । तत्र द्विः पृष्टायाः द्विः प्रतिप्रश्नो दातव्यः । एवं सति त्रिर्ग्रहणमपार्थकम् । तत्रैवं ब्रुवते । यथा दिष्टस्य प्रतिप्रश्नस्य त्रिरावृत्तिर्भवति । इत्येवं सति षट्कृत्वः प्राप्नोति । न चैवं शक्यम् । कथं तर्हि भवति । किं पिबसीति प्रश्नः[1] । प्रतिप्रश्नेनापि त्रिर्भवितव्यम् । एवं च वीप्सा निरर्थकोभयथापि[2] । नेत्युच्यते । प्रतिप्रश्ने तावत् त्रिर्ग्रहणं कृतं त्रित्वज्ञापनार्थम् । एवं चेत्तत्रैव प्राप्नोति । तेनोभयत्र वीप्सां करोति तुल्यत्वज्ञापनार्थम् । तेन किं सिद्धं भवति । तेन प्रश्नप्रतिप्रश्नयोरेव त्रिरुभयत्रेति सिद्धं भवति ॥

किं पिबसीति प्रश्नः । पुंसवनमिति प्रतिप्रश्नः । तत्र प्रतिप्रश्ने त्रिर्ग्रहणमाचार्येण कृतम् । अतस्तस्यैव त्रित्वप्राप्तौ उभयोस्तुल्यत्वज्ञापनार्थं उभयत्र वीप्सावचनम् । तेन प्रश्नोऽपि त्रिर्वाच्य इति सिद्धम् । (३)

**एवं त्रीन् प्रसृतान् ॥ ४ ॥**

अनेन विधिना त्रयः प्रसृताः प्राशितव्याः । एकस्मिन् प्रसृते प्राप्ते त्रयः प्रसृता विधीयन्ते ॥

अनेन विधिना त्रीन् प्रसृतान् प्राशयेत् । एकस्मिन् प्रसृते प्राप्ते त्रयः प्रसृतास्तुल्यधर्माणो विधीयन्ते । (४)

[1] A. त्रिः प्रश्नः प्रश्नः

[2] L' निरर्थका भविष्यति.

**अथास्यै मण्डलागारच्छायायां दक्षिणस्यां नासिकायामजीता-मोषधीं नस्तः करोति ॥ ५ ॥**

उक्तं यत्कर्म तत् पुंसवनं नाम वेदितव्यम् । तेन अथशब्दः प्रयुज्यते कर्मान्तरप्रज्ञापनार्थम् । किं पुनरिदं कर्म विधीयते । अनवलोभनम् । कुत एतत् । मन्त्रलिङ्गदर्शनात्—माहं पौत्रमघं नियाम्—इति । मण्डलागारछायायामिति । मण्डल अगारः कर्तव्यः । तस्य छायायां नस्तः कर्म कर्तव्यम् । दक्षिणस्यां नासिकायामिति[1] । नासिकाबिलद्वित्वाद्विशेषणं क्रियते दक्षिणस्यामिति । दक्षिणग्रहणं न कर्तव्यम् । कस्मात् । परिभाषासिद्धत्वात् । तत्र न[2] क्रियते । अनङ्गत्वात् नासिकायाः । अङ्गवचने सा[3] परिभाषा । इहेन्द्रियकर्मत्वान्न प्राप्नोति । तस्माद्दक्षिणस्यामित्यारभ्यते । अजीतामोषधीमिति[4] । अजीतामित्योषधिनामधेयमेवेदम् । न गुणविधिरिति । एवं सति ओषधीग्रहणमपार्थकम् । ओषधीग्रहणान्मन्यामहे—गुणविधिरयमिति[5] । तेन अजीर्णा ओषधी विधीयते[6] । का पुनः सा । दूर्वा । तामोषधीम्[7] । नस्तः करोति । येनोपायेन शक्यते कर्तुम् । अनुपदेशान्मन्त्रो न[8] भवति ॥

कर्मान्तरत्वात् कालान्तरप्राप्तावानन्तर्यार्थोऽथशब्दः । इदन्त्वनवलोभनं । कुतः । माहं पौत्रमघं नियाम्—इति मन्त्रलिङ्गात् । पुत्रसम्बन्धि अशोभनं माहं

[1] A. has no इति.

[2] न not in A. and L.

[3] L. omits सा.

[4] A. has no इति. L. omits ओषधिं.

[5] A. has इयं instead of अयम्.

[6] A. ओषधिर्विधीयते.

[7] A. दूर्वेत्युमोषधीम्. L. दूर्वेत्यमोषधीम्.

[8] A. L. omit न.

नियामित्यर्थः । अस्यै अस्याः मण्डलागारं कृत्वा तस्य छायायामुपवेश्यास्याः दक्षिणस्यां नासिकायां दूर्वा नस्तः करोति । दक्षिणग्रहणमिन्द्रियाणामनङ्गत्वज्ञापनार्थं । अजीतेति गुणनाम । अजीर्णेत्यर्थः । सा चौषधी दूर्वेत्युपदिशन्ति । नस्तः करणं नासिकायां रससेचनम् ॥ (५)

**प्रजावज्जीवपुत्राभ्यां हैके ।**

**आ ते गर्भो योनिमेतु पुमान्वाण इवेषुधिं ।**
**आ वीरो जायतां पुत्रस्ते दशमास्यः ॥**
**अग्निरेतु प्रथमो देवतानां सोऽस्यै प्रजां मुञ्चतु मृत्युपाशात् ।**
**तदयं राजा वरुणोऽनुमन्यतां यथेयं स्त्री पौत्रमघं न रोदादिति ॥ ६ ॥**

एके आचार्याः प्रजावज्जीवपुत्राभ्यां नस्तः कर्मेच्छन्ति । तेन नासिकायामोषध्यासेचनं आभ्यां मन्त्राभ्यां भवति इत्यर्थः[1] । अन्ये पुनस्तूष्णीमिति । तत् प्रागुक्तम् ॥

प्रजावता दृष्टो मन्त्रः प्रजावान् । जीवपुत्रेण दृष्टो मन्त्रो जीवपुत्रः यथा सूर्येति । आ ते गर्भ इति सूक्तं प्रजावान् । अग्निरेतु प्रथम इति सूक्तं जीवपुत्रः । आभ्यां सूक्ताभ्यामेके नस्तः करणमिच्छन्ति । अन्ये तूष्णीं । हशब्दोऽभिमतत्वज्ञापनार्थः ॥ (६)

**प्राजापत्यस्य स्थालीपाकस्य हुत्वा हृदयदेशमस्या आलभेत । यत्ते सुसीमे हृदये हितवन्तः प्रजापतौ । मन्येऽहं मां तद्विद्वांसमाह पौत्रमघन्नियाम्—इति ॥ ७ ॥**

[1] आभ्यां संस्कृतौ मन्त्रोक्ताभ्याम् । वभ्यां है के हशब्दमिति । This is what is found in A. L. after कर्मेच्छन्ति and before अन्ये. The passage as printed is taken from Trivandrum MS.

यत्ते सुसीमे इत्यनेन मन्त्रेण तत्रादित एव तावत् प्राजापत्यस्य स्थालीपाकस्य निर्वपणं करोति। तत्राज्यभागान्तं कृत्वा पुंसवनं कर्म करोति। ततस्तत्कर्म च। पश्चात् स्थालीपाकस्य जुहोति। कस्मात्। उभयोः कर्मणोरसाधारणः स्थालीपाकः। हुत्वा च हृदयदेशमस्या आलभेत स्पृशेदित्यर्थः। यत्ते सुसीम इत्यनेन मन्त्रेण। स्वयंकर्तृत्वं[1] अस्मिन् कर्मणि भवति। कुतः। मन्त्रलिङ्गदर्शनात्। माहं पौत्रमघं नियां इति। तत्र उच्यते[2]। तृतीये गर्भमासे इति द्वे कर्मणी विधीयेते पुंसवनमनवलोभनं च। गर्भलम्भनं नोपदिष्टमिति। तत्रैके ऋतुकालेऽप्यनादेशहोममिच्छन्ति। अपरे तु पाठान्तरम्। अध्यात्मसूक्तं[3] प्रेषयित्वा ऋतुवेलायां उदीर्ष्वात इत्यनया दक्षिणस्यां नासिकायां नस्तः करोतीत्येतद्गर्भलम्भनम् ॥

प्राजापत्यस्य स्थालीपाकस्यैकदेशं हुत्वा हृदयदेशं हृदयसमीपं अस्या आलभेत स्पृशेत् यत्ते इति मन्त्रेण। ततः स्विष्टकृदादि समापयेत्। इदं कर्म प्रतिगर्भमावर्तते गर्भसंस्कारत्वात्। प्रथमगर्भे तृतीयमासि यदि गर्भो न विज्ञातः तदा चतुर्थे कुर्यात्। विज्ञाते गर्भे तिष्ये पुंसवनं। तत् तृतीये मास्यन्यत्र गृष्टेः इति च स्मरणात्। गृष्टिः प्रथमगर्भः। पञ्चमे मास्यङ्गनिष्पत्तिर्भवति। स्वयमेव चास्य कर्ता माहं पौत्रमिति लिङ्गात्। तदभावे देवरः ॥ (७)

इति प्रथमे त्रयोदशी कण्डिका

---

[1] L. स्वयंकर्तृकत्वं.

[2] A. तत्र त उच्यते.

[3] A. अध्याडामूलम्.

**चतुर्थे गर्भमासे सीमन्तोन्नयनम् ॥ १ ॥**

अथोत्तरे कर्मणि। चतुर्थे[1] गर्भमासे इति। सीमन्तो यस्मिन् कर्मण्युन्नीयते तदिदं सीमन्तोन्नयनं नाम चतुर्थे गर्भमासे भवति। सीमन्तोन्नयनमिति विशेषग्रहणम्। तत्र प्रथमे गर्भे इत्येवं केचित् पठन्ति। कस्मात्। इतरथा प्रतिगर्भमिदं प्राप्नोति। तत्र[2] भविष्यति। सकृदेवेदं कर्म चोद्यते। ब्रवीति। एवं सति पुंसवनादीनामपि सकृदेव क्रिया प्राप्नोति। न चेष्यते। तेन यथा तेषां कर्मणां प्रतिगर्भमभ्यावृत्तिः[3] भवति एवमस्यापि। तस्मात् प्रथमगर्भे इति पठितव्यम्[4]। तथापि न पठितव्यम्। कस्मात्। पूर्वस्य कर्मणः प्रतिगर्भस्यावृत्तिर्युक्ता। संस्कारः प्रधानमावर्तयितुं नोत्सहते। कस्मात्। गर्भसंस्कारत्वात्। अस्य तु न भविष्यति। अगर्भसंस्कारत्वात्। तस्मान्न पठितव्यम्। नेत्युच्यते। इहापि गर्भे संस्कारो भवति। कुतः मन्त्रलिङ्गात्।

एवं त्वं गर्भमाधेहि दशमे मासि सूतवे।

इति। तेनास्यापि कर्मणः प्रतिगर्भमभ्यावृत्तिः प्राप्नोति। परिसंख्यातत्वाच्च संस्काराणां केचित्। अष्टाचत्वारिंशत्[5] संस्कारा विहिताः। तेन क्रिया प्राप्नोति। तस्मात् पठितव्यम्। कस्मात्। गर्भसंस्कारस्य गुणभूतत्वात् सीमन्तोन्नयनमात्रमप्रधानम्[6]। तेन गुणभूतो गर्भसंस्कारः प्रधानमावर्तयितुं

[1] A. L. द्वितीये.
[2] A. तत्तत्र.
[3] A. प्रतिगर्भमप्यावृत्तिः
[4] A. भवितव्यम्.
[5] A. omits अष्टा.
[6] A. has मन्त्र between मात्र and मप्रधानम्.

नोत्सहते । कथं पुनरेतद्गम्यते । यथा सीमन्तोन्नयनमिति तत्समाख्यानात् । यथा वैश्वदेव्यां विश्वे देवाः प्रधानाः अन्यास्वपि देवतासु विद्यमानासु । कस्मात् । तदुपदेशात्[1] । प्रधानहवींषि चैके इति तस्य ग्रहणं भविष्यति । एवमिहापि तत्समाख्यानात् सीमन्तोन्नयनस्य प्राधान्यम् । प्राधान्यान्नाभ्यावर्तते । ननु च हीनसंस्कारा भविष्यन्ति[2] । आधानसंस्कारा भवन्ति[3] आधानसंस्कारत्वात् । तस्मात् प्रथमगर्भे इति पठितव्यम् । तस्मात्तद्वाक्यं न पठितव्यम्[4] । पुंसवनस्य च[5] गर्भसंस्कारत्वात् प्रतिगर्भमभ्यावृत्तिः सिद्धा भवति । षष्ठाष्टमयोर्वा केचित् पठन्ति[6] । तदिष्यते ॥

सीमन्तो यस्मिन् कर्मणि उन्नीयते तत् सीमन्तोन्नयनं चतुर्थे मासि कार्यम् । इदं कर्म न प्रतिगर्भमावर्तते । स्त्रीसंस्कारत्वात् न त्वयं गर्भसंस्कारः । एवं तं गर्भमाधेहि इति मन्त्रलिङ्गात् । सत्यम् । तथापि नावर्तते आधारसंस्कारस्य प्राधान्यात् । कुतः प्राधान्यमिति चेत् । सीमन्तोन्नयनमिति समाख्याबलात् आधारस्य च संस्कृतत्वात् । सकृत् सकृत् संकृता यं यं गर्भं प्रसूते स सर्वः संस्कृतो भवेत् । तेनावृत्तिर्न भवतीति सिद्धम् ॥ (१)

**आपूर्यमाणपक्षे यदा पुंसा नक्षत्रेण चन्द्रमा युक्तः स्यात् ॥ २ ॥**

आपूर्यमाणपक्षे इत्युक्तो विग्रहः । शुक्लपक्षे इत्यर्थः । ननु च[7] आपूर्यमाणपक्ष एवेदं कर्म भविष्यति । तत्र[8] विशेषान्तरमारभ्यते । तेन

[1] L. द्वौपदेशात्.
[2] A. L. भविष्यन्तीति.
[3] A. omits आधानसंस्कारा भवन्ति.
[4] L. omits this sentence.
[5] L. omits च.
[6] L. omits केचित् पठन्ति.
[7] L. omits च.
[8] A. L. have no तत्र.

कृष्णपक्षे नक्षत्राख्या भवति। उच्यते। न वक्तव्यम्। कथम्। प्रकर्षेण युक्ते चन्द्रमसि कथमिदं कर्म स्यात्[1]। अथवा चन्द्रमस एव योगो नान्येन ग्रहेणेति[2] ॥

शुक्लपक्षे यदा पुंसा नक्षत्रेण चन्द्रमा युक्तः स्यात् तदेदं कर्म कार्यम्। पुंसा नक्षत्रेण पुन्नामधेयेन नक्षत्रेणेत्यर्थः। तिष्यो हस्तः श्रवण इत्यादिना। चन्द्रमा युक्तः स्यादिति वचनं प्रकर्षेण युक्ते चन्द्रमसि यथा स्यात्। एतदुक्तं भवति। षष्टिघटिकासु मध्ये मध्यमत्रिंशद्घटिकासु कुर्यात् इति ॥ (२)

**अथाग्निमुपसमाधाय पश्चादस्यानडुहं चर्मास्तीर्य प्राग्ग्रीवमुत्तरलोम तस्मिन्नुपविष्टायां समन्वारब्धायाम्—धाता ददातु दाशुषे—इति द्वाभ्याम्। राकामहम्—इति द्वाभ्याम्—नेजमेषः—इति तिसृभिः प्रजापते न त्वदेतान्यन्यः—इति च ॥ ३ ॥**

अथशब्दः कस्मात् क्रियते। अथशब्दं कुर्वन्नेतत्[3] ज्ञापयति। अन्यस्मिन्नपि काले भवतीत्येवमर्थं दर्शयति। कः पुनरसौ कालः। षष्ठाष्टमयोर्वेति। अन्येषां वक्तव्यमेतदारब्धम्। तस्मादथशब्दः कर्तव्यः। अथाग्निमुपसमाधायेत्येवमादि समन्वारम्भणान्तं गृहप्रवेशनीयेन[4] व्याख्यातम्। धाता ददातु इति द्वाभ्यामृग्भ्याम्। प्रत्यृचं जुहोति। राकामहम्—इति

[1] A. has आदादानिके माभूदिति. and L. has दादातिके भाभूदिति after स्यात्.

[2] L. नान्यन्न ग्रहणेति.

[3] L. कुर्वतेतत्.

[4] A. गृहप्रवेशनीये.

द्वाभ्याम् । नेजमेषः इति सूक्तम् । प्रजापते न त्वदेतान्यन्यः इति च प्रत्यृचं जुहोति ॥

जुहुयादिति शेषः । अथशब्दोऽन्यस्मिन्नपि काले भवतीदं कर्मेति ज्ञापनार्थः । कस्मिन् । षष्ठाष्टमयोर्मासयोः । शास्त्रान्तरे चायं कालो विहितः । अग्निमुपसमाधायेत्यादि गृहप्रवेशनीये व्याख्यातम् । आज्यभागान्तं कृत्वा धाता ददातु दाशुषे इत्यादिभिरष्टावाज्याहुतीर्जुहुयात् ॥ (३)

**अथास्यै युग्मेन शलाटुग्लप्सेन त्र्येण्या च शलल्या त्रिभिश्च कुशपिञ्जूलैरूर्ध्वं सीमन्तं व्यूहति भूर्भुवः स्वरोमिति त्रिः ॥ ४ ॥**

युग्मेन समेनेत्यर्थः । केन युग्मेन । शलाटुग्लप्सेन । शालाटुरिति अपक्वानां[1] फलानामाख्या । ग्लप्स इति स्तबकः । संघात इत्यर्थः । त्रेण्या च शलल्या । त्रीण्येतानि यस्याः सेयं त्र्येण्या[2] । शुक्लयेत्यर्थः । त्रिभिश्च कुशपिञ्जूलैः कुशतरुणैरित्यर्थः । एवमेतैर्द्रव्यैरूर्ध्वं सीमन्तं व्यूहति । भूर्भुवः स्वरों---इति । त्रिः त्रिरपि मन्त्रौ भवति । व्यूहति नाना करोति ॥

अस्यै अस्याः । युग्मेन समेन । केन शलाटुग्लप्सेन तरुणफलसंघातेन । शलाटुरिति अपक्वानां फलानां समाख्या । ग्लप्स इति स्तबक उच्यते । औदुम्बरस्तबकेन शास्त्रान्तरे दृष्टत्वात् । तदभावेऽन्येन । त्रीण्येतानि यस्याः सेयं त्र्येणी शलली । एतः शुक्ल इत्यर्थः । वर्णादनुदात्तात् तोपधात् तो नः (पा० ४. १. ३९) इति ङीप् । तकारस्य नत्वं च । ततो रषाभ्यां नो णः (पा० ८. ४. १) इति णत्वं । कुशपिञ्जूलैः कुशतरुणैः । एतैरेकीकृतैर्ललाटकेशयोः सन्धिमारभ्य ऊर्ध्वं सीमन्तं व्यूहति मन्त्रेण आ मूर्द्धप्रदेशात् केशान् पृथक् करोतीत्यर्थः । एवं त्रिर्व्यूहति । मन्त्रावृत्तिरुक्ता ॥ (४)

[1] L. पक्वानाम् .

[2] A. त्रि instead of त्र्येण्या.

**चतुर्वा ॥ ५ ॥**

चतुर्वा व्यूहति ॥

चतुर्वा व्यूहति मन्त्रेण ॥ ५ ॥

**वीणागाथिनौ संशास्ति—सोमं राजानं संगायेतामिति ॥ ६ ॥**

वीणागाथिनौ संशास्ति । किमिति । सोमं राजानं संगायेतामिति । वीणा च गाथा च वीणागाथे । वीणागाथे ययोस्तावेतौ वीणागाथिनौ । संशास्ति । अनेन प्रैषेण सोमं राजानं संगायतामिति ॥

वीणा च गाथा च वीणागाथे । ते ययोः स्तः तौ तथोक्तौ । तौ संशास्ति सम्प्रेष्यति । सोमं राजनं सङ्गायेतामिति ॥ (६)
तौ च एतां गाथां गायत इत्याह ।

का पुनरसौ गाथेति—

**सोमो नो राजावतु मानुषीः प्रजा निविष्टचक्रासाविमां नदीमुपवसिथा भवन्ति ॥ ७ ॥**

एतां गाथां तौ गायतः । निविष्टचक्रासाविति[1] । असावित्यस्य पदस्थाने अनया आमन्त्रितया विभक्त्या[2] नद्या नामादिशेत् यस्याः समीपे वसन्ति ॥

असावित्यस्य स्थाने यस्या नद्याः समीपे वसन्ति तस्या नाम आमन्त्रण-विभक्त्या ब्रूयाताम् । निविष्टचक्रा गङ्गे इति ॥ (७)

[1] A. L. अनिविष्टचक्रासाविति.

[2] A. मन्त्रणया विभक्त्या. L. मन्त्रेण या विभास्या.

**ब्राह्मण्यश्च वृद्धा जीवपत्न्यो जीवप्रजा यद्यदुपदिशेयुस्तत्तत् कुर्युः ॥ ८ ॥**

यद्यदुपदिशन्ति[1] तत्तत् कर्तव्यम् । अत्र तु स्विष्टकृत्कालः प्रैषं दत्वा भवति ॥

एवंगुणयुक्ता ब्राह्मण्यो यद्यत् ब्रूयुः तत्तत्कार्यम् । प्रैषं दत्त्वा स्विष्टकृदादि समापयेत् ॥ (८)

**वृषभो दक्षिणा ॥ ९ ॥**

अत्र तु कः कर्ता भवति । स्वयमेव । कुतः । मन्त्रलिङ्गात्— अस्यै मे पुत्रकामायै इति । ननु च दक्षिणादानं नोपपद्यते[2] इति । ब्रह्मणे दक्षिणां[3] ददाति[4] । ब्रह्मणो[5]ऽभावे येऽत्र[6] संनिहिताः तेभ्यो ददाति ॥

वृषभो गौरासेचनसमर्थः । तं दक्षिणां दद्यात् । अत्र तु स्वयमेव कर्ता । कुतः । अस्यै मे पुत्रकामायै इति लिङ्गात् । कस्मै तर्हि दक्षिणा । ब्रह्मणे यद्यस्ति । तदभावे सन्निहितेभ्यो ब्राह्मणेभ्यः कर्माङ्गत्वात् दक्षिणानाम् ॥ (९)

इति प्रथमे चतुर्दशी कण्डिका

---

[1] यद्यदुपदिशन्ति. omitted in A.

[2] L. दानेनपपद्यते.

[3] L. omits दक्षिणां. A. दक्षिणा.

[4] L. दद्यादिति.

[5] L. ब्रह्मणे.

[6] L. यत्र.

कुमारं जातं पुरान्यैरालम्भात् सर्पिर्मधुनी हिरण्यनिकाषं हिरण्येन प्राशयेत्—प्र ते ददामि मधुनो घृतस्य वेदं सवित्रा प्रसूतं मघोनां। आयुष्मान् गुप्तो देवताभिः शतं जीव शरदो लोके अस्मिन् ॥ १ ॥

प्र ते ददामीत्यनेन मन्त्रेण कुमारस्य जातस्यायं संस्कारो भवति। तत्र कुमारग्रहणं न कर्तव्यम्। जातमित्येव वक्तव्यम्। कुमार्या अपि प्रसज्येत। न भविष्यति। कस्मात्। जातमिति पुंलिङ्गोपदेशात्। नेत्युच्यते। नात्र लिङ्गं विवक्षितम्। किं तर्हि। नाम विवक्षितम्[1]। कुमारग्रहणं[2] कर्तव्यं कुमारीनिवृत्त्यर्थम्। तथापि न कर्तव्यम्। वक्ष्यति[3] आवृतैव कुमार्या इति। प्रवासागमनविधानार्थं तद्वचनम्। तस्मात् कुमारग्रहणं कर्तव्यं कुमारीनिवृत्त्यर्थं येषां तदुभयथा। अष्टमे वर्षे ब्राह्मणमुपनयेदिति कथं कुमारस्य स्यात्[4]। न कुमार्या इति। ननु च तत्रापि पुंलिङ्गोपदेशात्[5] कुमार्या न भविष्यतीति[6]। नेत्युच्यते। तत्रापि न लिङ्गं विवक्षितम्। जातिर्विवक्षिता। जातौ विवक्षितायां च लिङ्गमप्रमाणम्। तद्यथा लोके ब्राह्मणो न हन्तव्य इत्युक्ते ब्राह्मण्यपि न हन्यते। कस्मात्। जातेर्विवक्षितत्वात्। एवमिहापि जातिविवक्षायां सत्यां[7] कुमारी[8] अपि प्रसज्येत। तन्निवृत्त्यर्थं कुमारग्रहणमधिकारार्थं कर्तव्यम्। न ह्यजातस्य

[1] There is च after this in L.

[2] A. कुमारग्रहा.

[3] L. omits वक्ष्यति.

[4] A. L. कुमारः स्यात्.

[5] L. पुंलिङ्गोपदेशादिति.

[6] L. omits कुमार्या न भविष्यतीति.

[7] L. omits सत्यां.

[8] A. L. कुमार्याः

कर्मेदं शक्यते कर्तुम् । ब्रवीति । जातग्रहणमप्यधिकारार्थम्[1] । षोडशे वर्षे गोदानमिति । तत्कथं जन्म[2] षोडशे वर्षे स्यादिति । पुरान्यैरालम्भात् पुरस्तादित्यर्थः । अन्यैरालम्भात् स्पर्शनादित्यर्थः । अथेदं कर्म भवति । अन्यग्रहणं कर्तव्यं अनधिकृतैरालम्भनप्रतिषेधार्थम् । सर्पिर्मधुनी हिरण्यनिकाषं च । हिरण्येनैव प्राशयेत् । हिरण्येन इत्युच्यते पाणिना मा भूदिति । निकाषं इति निकर्षणम् । निकाषं क्व भवति । शिलायाम् । सर्पिरादीनि द्रव्याणि प्र ते ददामि इत्यनेन मन्त्रेण प्राशयति[3] ॥

इदं जातकर्म । कुमारग्रहणं कुमारीनिवृत्त्यर्थम् । ननु कुमार्या अपि भवत्येव जातकर्म । कुतः । वक्ष्यति आवृतैव कुमार्यै (१.१९.१२) इति । उच्यते । प्रवासादागतस्य विहितं कर्मावृता भवति । न जातकर्म अनन्तरत्वात् । एवमेके । अन्ये पुनरावृतैव कुमार्यै इत्येतदुभयार्थमिति वदन्ति । तेन कुमार्या अपि जातकर्म भवति । मनुनाप्युक्तम्—

अमन्त्रिका तु कार्येयं स्त्रीणामावृदशेषतः । (२. ६६)

इति । तर्हि कुमारग्ररणं किमर्थम् । अधिकारार्थम् । अष्टमे वर्षे ब्राह्मणमुपनयेदित्युपनयनं कुमारस्यैव यथा स्यात् न कुमार्या इति । ननु ब्राह्मणमिति पुंलिङ्गनिर्देशादेव न भविष्यति । न जातिनिर्देशे लिङ्गं विवक्षितम् । यथा ब्राह्मणो न हन्तव्य इति ब्राह्मण्यपि न हन्यते एवमत्रापि स्त्रियाः प्रसज्येत । तन्निवृत्त्यर्थं कुमारग्रहणं

[1] L. omits अपि.

[2] A. जन्मभिः

[3] The reading in A. and L. for this portion is very corrupt and I have reconstructed the passage from the Trivandrum MS. I give the reading in A, with the variants in L. indicated— सर्पिमधुनी हिरण्य निकाषं मि हिरण्ये न प्राशयेत् (L. omits all words after सर्पिर्मधुनी). कर्णयो (कर्मणो in L.) रुपनिधाय (ये in L.) ति । किं पुनर्निदध्यादिति । हिरण्यम् । नेत्युच्यते । पाणिना मा भूदिति । निकषः क्व भवति । शिलायामेतानि सर्पिरादीनि द्रव्याणि (L. omits णि) प्र ते ददामीत्यनेन मन्त्रेण प्राशयति (येत् in L.)

इति। जातग्रहणमप्यधिकारार्थम्। गोदानं षोडशे वर्षे इति जन्मतः प्रभृति षोडशो यथा स्यात् उपनयनप्रभृति मा भूदिति। पुरा पूर्वमित्यर्थः। अन्यग्रहणमनधिकृतालम्भनात् प्राक् कर्म कर्तव्यमित्येवमर्थम्। सर्पिर्मधुनी हिरण्येन निकाशयति। ते हिरण्यसंसृष्टे हिरण्येन प्राशयेत् मातुरुपस्थ आसीनं प्र ते ददामीति मन्त्रेण॥ (१)

**कर्णयोरुपनिधाय मेधाजननं जपति।**
**मेधां ते देवः सविता मेधां देवी सरस्वती।**
**मेधां ते अश्विनौ देवावाधत्तां पुष्करस्रजौ॥ २॥**

कर्णयोरुपनिधाय मेधाजननं जपति—मेधां ते देवः इत्यनेन मन्त्रेण।

अस्य कर्णयोः हिरण्यं निधाय मेधाजननं जपति मेधां ते इति। उपग्रहणं तस्य मुखसमीपे आत्मनो मुखं निधाय जपार्थम्। मेधाजननमित्यस्य मन्त्रस्याख्या। सकृन्मन्त्रः। पर्यायेणोपनिधानमित्येके। अन्ये मन्त्रावृत्तिमिच्छन्ति॥ (२)

**अंसावभिमृशति—अश्मा भव परशुर्भव हिरण्यमस्तृतं भव। वेदो वै पुत्रनामासि स जीव शरदः शतं इति। इन्द्र श्रेष्ठानि द्रविणानि धेह्यस्मे प्रयन्धि मघवन्नृजीषिन्निति च॥ ३॥**

अंसावभिमृशति अश्मा भव इत्येतैः मन्त्रैः। अत्र संशयः। किं प्रत्यंसं[1] अभ्यावर्तन्ते मन्त्राः[2] आहोस्वित्सकृदेव। प्रयुक्तेः उभयोरभिमर्शनं कर्तव्यमिति। तत्रैके सकृत्प्रयोगमिच्छन्ति। द्वार्याभिमर्शनवत्। यद्वार्याभिमर्शने मन्त्रः सकृत्प्रयुजते पर्यायेणाभिमर्शनं[3] भवति तद्वदिहापीति।

[1] L. प्रत्यक्षं.
[2] L. omits मन्त्राः
[3] A. L. पर्यायेणांसावभिमर्शने.

नेत्युच्यते । तत्र सकृत्प्रयोग उपपद्यते । कस्मात् । द्विवचनसंयुक्तत्वान्मन्त्रस्य । इह त्वेकवचनसंयुक्तो मन्त्रः । तेन प्रत्यंसमभ्यावृत्तैरेव भवितव्यम् । उच्यते । नात्रांसावभिधीयेते । किं तर्हि । कुमारोऽभिधीयते । तस्मात्[1] तस्यैकत्वात् सकृदेव मन्त्रो भवतीत्येवमेके संप्रतिपन्नाः । अन्ये पुनर्मन्त्रविभागमिच्छन्ति । कस्मात् । आचार्यप्रवृत्तिदर्शनात् । आचार्येण विभक्तावेतौ मन्त्राविति । कथम् । इतिकारपाठात् । अन्यत्र मध्ये न क्वचिदितिकारं पठति । इह च करोति । तेन मन्यामहे विभक्तावेतौ मन्त्राविति । उत्तरत्र चकारग्रहणादेवं मन्त्रविभागमुपदिशन्ति । तेन कल्पजेन[2] मन्त्रेण दक्षिणमंसमभिमृशति । एवमेके । अपरे त्वाहुः । सकृदेव मन्त्रो भवति । न विभागो न च पृथगभिमर्शो[3] भवति । तत्राशक्यत्वात्[4] । पृथगभिमर्शो भवति द्वयोः[5] । इह तु शक्यत्वात् द्वयोरसंयोस्तदभिप्रेतम् । यस्य त्रयाणां पक्षाणां अन्यः पक्षोऽभिप्रेतः तस्यापि कुर्वतो न दोषः[6] । सर्वेषां गमकवत्त्वात्[7] ॥

स्तनबाह्वोर्मध्यप्रदेशोंऽसः । अत्र बहुधा विप्रतिपन्नाः । तत्रैके सकृन्मन्त्रं पर्यायेणांसाभिमर्शनमिच्छन्ति द्वार्याभिमर्शनवत् । ननु युक्तस्तत्र सकृन्मन्त्रः । द्विवचनयुक्तत्वात् मन्त्रस्य । इह त्वेकवचनयुक्तः । अत आवृत्त्या भवितव्यम् । नैतदेवं । नात्रांसावुच्येते । किन्तर्हि । कुमारः । स चैकः । तस्मान्नावृत्तिरिति । अन्ये मन्त्रविभागमिच्छन्ति । अश्मा भवेत्यनेन दक्षिणमंसमभिमृशेत् । इन्द्र श्रेष्ठानि अस्मे प्रयन्धि इत्याभ्यां सव्यमिति । कथं पुनर्मन्त्रविभागो ज्ञातः । मध्ये इति करणात् । न हि कचित् मन्त्रमध्ये इतिकरणं पठन्ति । अपरे त्वाहुः सकृदेव

[1] A. L. कस्मात.
[2] L. कृत्वजन.
[3] L. मृशो.
[4] L. तत्र शक्यत्वात्.
[5] A. L. द्वार्ययो:
[6] A. पूर्वददोष: L. पूर्वदोष:
[7] A. L. सर्वेषामागमत्वात.

त्रयो मन्त्रा वक्तव्याः। न च मन्त्रविभागः। न च पृथगभिमर्शः। द्वार्यभिमर्शने त्वशक्यत्वात् पृथगभिमर्शः। इह तु शक्यते युगपदंसौ स्प्रष्टुम्। यत्पुनरुक्तं इतिकरणादिति तत्र ब्रूमः। अन्यत्रापि मन्त्रमध्ये इतिकारः पठ्यते यथा आसीद सदनं स्वमासीद सदनं स्वमिति मा हिंसीर्देवप्रेरित इति। अयमेव नः पक्षोऽभिप्रेतः। यस्य त्रयाणामन्यतमः पक्षोऽभिप्रेतः तस्यापि कुर्वतो न दोषः सर्वेषां गमकत्वादिति भाष्यकारः। अत्रैके मन्त्रविभागः श्रेयानित्याहुः मध्ये इतिकारात्। नन्वन्यत्रापि विद्यते इत्युक्तं। तत्रापि विभाग एव किमुत्पतसीति बर्हिषि निधाय मा हिंसीरित्यभिमन्त्रयेत्। कुत एतत्। आनन्तर्ययोगात्। ननु इडायां दृश्यते हविर्जुषन्तामिति तस्मिन्नुपहूत इति। अनर्थज्ञो भवान्। इतिकारो मन्त्रस्य मध्ये वृथा न पठ्यते इति वयं ब्रूमः। इडायां तु मन्त्रैकदेशे इतिकारः। युष्मत्पक्षे त्वभिमन्त्रणे इतिकारो वृथैवेति। तदसत्। भगवता भाष्यकारेण यः पक्षः परिगृहीतः स एव सम्यक्। अन्यत्रापि मन्त्रमध्ये इतिकारदर्शनात्। नमो यत्र निषीदसीति। अमुं मा हिंसीरमुं मा हिंसीरिति चेति। तेन त्रीन् मन्त्रान् सकृदुक्त्वा युगपदेवोभावंसौ स्पृशेदिति सिद्धम्॥ (३)

**नाम चास्मै दद्युः॥ ४॥**

कुर्युरित्यर्थः। कीदृग्लक्षणं तन्नामेति। तस्य लक्षणमाचष्टे॥

कुर्युरित्यर्थः। नामकरणस्याचार्येण कालान्तरानुक्तेः जातकर्मानन्तरं कार्यमित्येके। अन्ये शास्त्रान्तरोक्तः कालो ग्राह्य इत्याहुः। उक्तं च मनुना

नामधेयं दशम्यां तु द्वादश्यां वापि कारयेत्।
पुण्ये तिथौ मुहूर्ते वा नक्षत्रे वा गुणान्विते॥ इति॥ (४)

कीदृग्लक्षणं तन्नामेत्याह॥

**घोषवदाद्यन्तरन्तस्थमभिनिष्ठानान्तं द्व्यक्षरम्॥ ५॥**

घोषवन्तो वर्णा आदौ कर्तव्याः। अन्तरन्तस्थमिति मध्येऽन्तस्थाः कर्तव्याः। अभिनिष्ठानान्तमिति। अभिनिष्ठानो नाम विसर्ज-

नीयः। विसर्जनीयान्तमित्युक्तम्। द्व्यक्षरम्। द्वे अक्षरे यस्य परिमाणं तदिदं द्व्यक्षरं नाम परिमाणतः। भवः। रुद्रः। देवः इत्येवंप्रकाराणि ॥

प्रथमद्वितीयवर्णानामूष्माणश्च हकारवर्जमघोषवन्तः। शिष्टं घोषवन्तः। तदादौ यस्य तत् तथोक्तं। अन्तर्मध्येऽन्तस्था यस्य तत् तथोक्तं। यकारादय-श्चतस्रोऽन्तस्थाः। अभिनिष्ठानो विसर्जनीयः। सः अन्ते यस्य तत् तथोक्तम्। अक्षरं स्वरः। अकारादयो द्वादश स्वराः। शिष्टं व्यञ्जनम्। द्वे अक्षरे यस्य तत् द्व्यक्षरम्। व्यञ्जनमपरिमितम् ॥ (५)

चतुरक्षरं वा ॥ ६ ॥

चतुरक्षरं वा नाम कर्तव्यम्। एतैर्लक्षणैः संयुक्तं भवेत्। देवदत्तः। भवनाथः इत्येवंप्रकाराणि ॥

चतुरक्षरं वा उक्तलक्षणं नाम कुर्युः। भद्रः देवः भवः भवनाथः नाग-देवः रुद्रदत्तः देवदत्तः इत्येवंलक्षनानि नामानि भवन्ति ॥ (६)

द्व्यक्षरं चतुरक्षरं वेति यदुक्तं तत्काम्यमपीत्याह।

द्व्यक्षरं प्रतिष्ठाकामश्चतुरक्षरं ब्रह्मवर्चसकामः ॥ ७ ॥

द्व्यक्षरं प्रतिष्ठाकामस्य कर्तव्यम्। तत्र कस्यायं कामः। कुमारस्य। कः कामयते। यो नाम करोति। कस्मात्। इतरस्याशक्यत्वात्। ब्रह्मवर्चसं यः कामयते तस्य चतुरक्षरं कर्तव्यम् ॥

प्रतिष्ठाब्रह्मवर्चसे च कुमारस्य तत्संस्कारत्वात् न कर्तुः ॥ (७)

अथवा।

युग्मानि त्वेव पुंसाम् ॥ ८ ॥

युग्मानीति। युग्माक्षराणीति समानाक्षराणीत्यर्थः। तेन षडक्षरमित्येवमादीन्यपि भवन्ति वसुशर्मजनार्दनदेवघोष इत्येवंप्रकाराणि। एवकारः किमर्थः। अवधारणार्थः। युग्मत्वमेवाश्रयेत न पूर्वाणि लक्षणानि। तेन किं सिद्धं भवति। पुरन्दरः विष्णुशर्मा इत्येवंप्रकाराणि अपि[1] नामानि सिद्धानि भवन्ति॥

युग्मानि युग्माक्षराणि पुंसां नामधेयानि भवन्ति। एवकारोऽवधारणार्थः। कथं युग्ममेवाद्रियेत न पूर्वाणि लक्षणानीति। तेन शिवदत्तः नागदत्तः देवस्वामी वसुशर्मा रुद्रः जनार्दनः वेदघोषः पुरन्दरः विष्णुशर्मा इत्यादि सिद्धम्॥ (८)

**अयुजानि स्त्रीणाम्॥ ९॥**

अयुजानि अयुग्माक्षराणि स्त्रीणां नामानि कर्तव्यानि। यथा सर्वदा यशोदा इत्येवंप्रकाराणि॥

अयुजान्ययुग्माक्षराणि स्त्रीक्षां नामानि भवन्ति। सुभद्रा सावित्री सत्यदा वसुदा इत्यादि॥ (९)

सांव्यवहारिकं नाम कृत्वा अभिवादनीयं च कार्यमित्याह।

**अभिवादनीयं च समीक्षेत तन्मातापितरौ विज्ञायेतामोपनयनात्॥१०॥**

अभिवादनीयं च नाम समीक्षेत। अभिवादनीयमिति आहूतः सन् येन[2] नाम्ना तमभिवादयति तदभिवादनीयम्। अव्यावहारिकं[3] इत्यर्थः।

[1] L. omits अपि.

[2] A. L. तेन.

[3] A. अथ सा व्यवहारिकं L. असौ व्यवहारिकं.

तच्च समीक्षेत कुर्यादित्यर्थः । तन्मातापितरौ विज्ञायेताम्[1] । तदभिवादनीयं नाम मातापितरौ कुर्याताम् । आ उपनयनात् । प्रवासादेत्य उत्तरार्थं कुर्वन्ति । एवमेते द्वे नामनी विहिते । पूर्वं नाम गुह्यं उत्तरं व्यावहारिकम् । इत्येवमेके । अन्ये पुनः नाम चास्मै दद्युः । कारयेयुरित्यर्थः । कस्मिन् काले तन्नाम कर्तव्यम् । आचारतः कालाः । केषां चिद्दशरात्रे । केषांचिदन्यस्मिन् काले । तेनैतदेव सांव्यवहारिकं नाम । अभिवादनीयं च समीक्षेत । अनेन[2] नाम्नाभिवादयति । एतच्च मातापितरौ विज्ञायेतां तावद्यावदुपनयनमिति । उपनीतस्य सतस्तस्य माताप्येतत्समाचष्टे अनेन[3] नाम्ना अभिवादयस्वेति । तेन पूर्वं सांव्यवहारिकं उत्तरमभिवादनीयमिति सिद्धं भवति[4] ॥

येन नाम्ना उपनीतः अभिवादयते तच्च समीक्षेत कुर्यादित्यर्थः । तच्च मातापितरावेव विद्यातामोपनयनात उपनीतस्य त्वाचक्षते अनेन नाम्नाभिवादयस्वेति ॥ (१०)

**प्रवासादेत्य पुत्रस्य शिरः परिगृह्य जपति अङ्गादङ्गात् सम्भवसि हृदयादधिजायसे । आत्मा वै पुत्रनामासि स जीव शरदः शतमिति मूर्द्धनि त्रिरवघ्राय ॥ ११ ॥**

प्रवासादागतस्य पुत्रस्य शिरः परिगृह्य सर्वतो गृहीत्वा । मूर्धनि त्रिरवघ्राय मूर्ध्नः त्रिरवघ्राणं करोति । अवघ्राणं कृत्वा अथ जपति अङ्गादङ्गादित्येतं मन्त्रम् ॥

[1] विद्यातां is another reading of the text.

[2] A. L. have मन्त्रेण after अनेन.

[3] A. has ते च and L. ते न before अनेन.

[4] L. omits सिद्धं भवति.

प्रवासादागत्य गृहानीक्षेताप्यनाहिताग्निरित्यादिसूत्रोक्तमार्गेण विधिं कृत्वा पुत्रस्य शिरः परिगृह्य सर्वतो गृहीत्वा मूर्द्धनि त्रिरवघ्राय ततो जपति अङ्गादङ्गादिति ॥ (११)

आवृतैव कुमार्यै ॥ १२ ॥

कुमार्याः आवृतैव कर्म कर्तव्यं अमन्त्रकम् । तत्रैके अनन्तरं कर्मोपदशन्ति । ननु चैवं सति जातकर्म समन्त्रकं प्राप्नोति । कुमारग्रहणं न भवति । अन्ये पुनरुभयं कर्म आवृता इच्छन्ति । कस्मात् । उभयोर्विशेषोऽयमिति । आवृतैव कुमार्यै इत्येवमुभयथा संप्रतिपन्नाः ॥

कुमार्यास्तु अमन्त्रकं कुर्यादिति । अनन्तरस्य चायं शेष इत्येके । अनन्तरस्य जातकर्मणश्चेत्यपरे ॥ (१२)

इति प्रथमे पञ्चदशी कण्डिका

---

षष्ठे मास्यन्नप्राशनं ॥ १ ॥

जन्मनः प्रभृति यः षष्ठो मासः तस्मिन् षष्ठे मासि अन्नप्राशनं कर्तव्यम् ॥

जन्मप्रभृति षष्ठे मासे न गर्भप्रभृति जाताधिकारात् । तत्रान्नप्राशनं नाम कर्म कार्यम् ॥ (१)

आजमन्नाद्यकामः ॥ २ ॥

अजस्येदमाजम् । तत्राजमिति तद्धितनिर्देशे संशयः । आजं क्षीरं आजं मांसं दधि घृतमिति । तत्र मांसमित्युच्यते । कुतः । तैत्तिरेण सहोपदेशात् ॥

अजस्येदमाजम् । तैत्तिरसाहचर्यान्मांसस्यात्र ग्रहणं न क्षीरदधिघृतानाम् ॥ (२)

तैत्तिरं ब्रह्मवर्चसकामः ॥ ३ ॥

तैत्तिरं मांसं ब्रह्मवर्चसकामः प्राश्नीयात् । तत्रोच्यते । किमनयोर्व्यञ्जनेनोपदेशः आहोस्विदन्नत्वेनोपदेश इति । किं चातः । यदि तावद्व्यञ्जनत्वेनोपदेशः ओदनस्यैते व्यञ्जने भवतः कामसंयोगेन । अथान्नत्वेन एतावेव प्राशयेत्[1] । तत्र व्यञ्जनत्वेनोपदेशः । कस्मात् । लोके व्यञ्जने एते दृष्टे । तथा दृष्टत्वादिहापि व्यञ्जने एते भवतः ॥

तित्तिरेरिदं तैत्तिरम् । आजतैत्तिरयोर्व्यञ्जनत्वेनोपदेशो नान्नत्वेन तथा लोके प्रसिद्धत्वात् । तेनान्नमपि सिद्धम् ॥ (३)

घृतौदनं तेजस्कामः ॥ ४ ॥

प्राश्नीयात् । तत्र संशयः । किं घृतमिश्र ओदनः घृतौदनः[2] आहोस्वित् घृतेन संस्कृत ओदनो घृतौदन इति । उच्यते । घृतेन संस्कृत ओदनो घृतौदन इत्युच्यते[3] । कथम् । ओदनग्रहणात् । यदि हि[4] घृतमि-

[1] A. L. तथान्नत्वेनैव तावदेव प्राशयेत.

[2] L. omits घृतौदनः

[3] L. omits the whole sentence.

[4] L. omits हि.

श्र ओदन अभिप्रेतः[1] स्यात् घृतं तेजस्काम इत्येवमाचक्षीत । ननु चैवं सति घृतमात्रस्यैव प्राशनं प्राप्नोतीति । न प्राप्स्यति । कस्मात् । यथा पूर्वयोः व्यञ्जनत्वेनोपदेशः कल्प्यते एवमिहापि व्यञ्जनत्वेनोपदेशः कल्प्यते[2] । एवं सति[3] यदोदनग्रहणं करोति तत् ज्ञापयति—घृतेन संस्कृत ओदनो घृतौदनः इति[4] ॥

घृतसंस्कृत ओदनो घृतौदनः । कुतः ओदनग्रहणात् । यदि हि घृतमिश्रोऽभिप्रेतः स्यात् घृतं तेजस्काम इत्येवावक्ष्यत् । ततश्च पूर्ववद्व्यञ्जनत्वेनान्नमपि सिध्यत्येव । सृते नेदीयसि घृतसेके कृते घृतसंस्कृतो भवति न तु घृते श्रपणम् । विक्लेदानुपपत्तेः ॥ (४)

**दधिमधुघृतमिश्रमन्नं प्राशयेत् अन्नपतेऽन्नस्य नो देह्यनमीवस्य शुष्मिणः। प्र प्रदातारं तारिष ऊर्जं नो धेहि द्विपदे चतुष्पदे इति ॥ ५ ॥**

दध्यादिभिर्द्रव्यैरकामसंयोगे प्राश्नीयात् । अन्नपते इत्ययं प्राशनमन्त्रः । तत्र किमयं प्राशनमन्त्र अनन्तरे एव प्राशने भवति आहोस्वित्सर्वेषु प्राशनेष्विति[5] । तत्रानन्तरविधानात्तत्रैव प्राप्नोति । नेत्युच्यते । सर्वत्र संभवति । यथा अन्नमिह विहितं सर्वेषु भवति तद्वद्भविष्यति । किं पुनः कारणमिहाम्नातमन्यत्र भवतीति । नित्यमिदं प्राशनम् । पूर्वेण च कामसंयोगो विधीयते । कामसंयुक्तश्चार्थश्चोद्यमानो नित्यं तावत्तिष्ठति ।

[1] A. घृतमिश्रोऽभिप्रेतः

[2] L. omits एवमिहापि व्यञ्जनत्वेनोपदेशः कल्प्यते.

[3] A. सिद्धे for सति.

[4] इति not in A. and L.

[5] L. has अन्नेषु before प्राशनेष्विति.

तेन व्यञ्जनकामसंयोगेन[1] योज्यमानं व्यञ्जनमेवाधिकरोति। यदन्यत्सर्वं नित्यवदेव तद्भवति। तेन मन्त्रश्च ओदनश्च सर्वत्र भवतीति सिद्धम्। एवं ब्रुवतो दोषः। यत्र व्यञ्जनं ओदनं चोपदिश्येते तत्र मन्त्रो न प्राप्नोति। यथा घृतौदनं तेजस्काम इति। प्राप्नोतीत्युच्यते। कस्मात्। तुल्यत्वात्। कामसंयोगस्य परो न व्यञ्जनधर्मो भवति। स उपदेशः अन्नस्य प्राप्नोति प्राशने विहितत्वात्। तेन यत्र प्राशनं तत्र मन्त्रः। घृतौदनं तेजस्कामसंयोगेन दृष्टं तस्माद्भवति ॥

अकामसंयोगेन दध्यादिमिश्रमन्नं प्राशयेत् अन्नपतेऽन्नस्य न इति मन्त्रेण। अयं मन्त्रः सर्वप्राशनेष्वपि भवति। कुतः। प्राशनसहितत्वात् मन्त्रस्य। प्राशयेदित्यस्य च सर्वशेषत्वात्। आज्यं प्राशयेदित्यादि ॥ (५)

आवृतैव कुमार्यै ॥ ६ ॥

कुमार्या आवृता इदं कर्म कर्तव्यम्। अमन्त्रकमित्यर्थः ॥

कुमार्यास्त्वमन्त्रकमन्नप्राशनं कार्यमित्यर्थः ॥ (६)

इति प्रथमे षोडशी कण्डिका

---

तृतीये वर्षे चौलम्। यथाकुलधर्मं वा ॥ १ ॥

जन्मनः प्रभृति तृतीयं वर्षम्। तस्मिन् तृतीये वर्षे चौलकर्म कर्तव्यम्। यस्मिन् काले कुलधर्मः तस्मिन् वा चौलकर्म कर्तव्यम्। तेन

[1] L. has कामव्यञ्जनसंयोगेन.

पूर्वेण कालेन सहायं विकल्प्यते । यस्य कुलधर्मे अन्यः कालो न[1] भवति यस्यापि कुलधर्मत्वेन न कश्चित्कालश्चोदितः तस्य तृतीये एव वर्षे भवति ॥

कुलधर्मोपदिष्टे वा काले चौलं कार्यम् । जन्मप्रभृति तृतीये वर्षे वा कार्यमिति व्यवस्थितविकल्पः । केषाञ्चिदुपनयनेन सह स्मर्यते इति ॥ (१)

**उत्तरतोऽग्नेर्व्रीहियवमाषतिलानां पृथक् पूर्णशरावाणि निदधाति ॥ २ ॥**

अग्नेरुत्तरतो व्रीह्यादीनां द्रव्याणां शरावाणि पृथक् कारयित्वा निदधाति स्थापयति । तत्र पृथग्ग्रहणं न कर्तव्यम् । कस्मात् । द्रव्यभेदादेव भेदः सिद्ध इति । उच्यते । न शरावभेदार्थं पृथग्ग्रहणम् । किंतु द्रव्यभेदार्थमेव[2] । इह समासोपदेशान्मिश्रितानां पूरणं प्राप्नोति । न भविष्यति । यथा व्रीहियवमाषतिलैरिति[3] सत्यपि समासोपदेशे एकमेव द्रव्यं प्रसज्येत । तन्निवृत्त्यर्थं पृथग्ग्रहणं क्रियते । कथं पृथग्भूतानां सर्वेषां द्रव्याणां शरावाणि निधीयेरन्निति ॥

प्रणीताप्रणयनोत्तरकाले उत्तरतोऽग्नेः व्रीहियवमाषतिलानां पूर्णशरावाणि निदधाति स्थापयति । पृथग्ग्रहणं द्रव्यभेदार्थम् । पृथक् पूरयित्वा निदध्यादिति । अन्यथा समासोपदेशान्मिश्रितानां पूरणं स्यात् । यथा सर्पिर्मधुनी हिरण्यनिकाषमित्यमिश्रितानां प्राशनम् । अथवा सत्यपि समासोपदेशे यथाकामं व्रीहियवतिलैरित्यत्रैकं द्रव्यं भवति । एकेन कृतार्थत्वात् । एवमिहाप्येकं द्रव्यं प्रसज्येत । तन्निवृत्त्यर्थं पृथग्ग्रहणम् ॥ (२)

कथं पृथग्भूतानां सर्वेषां द्रव्याणां पूर्णशरावाणि निधीयेरन्निति ।

[1] A. L. omit न.

[2] A. L. द्रव्यार्थमेव.

[3] L. has व्रीहितिलमिश्रैः माषैः सह इति.

**पश्चात्कारयिष्यमाणो मातुरुपस्थ आनडुहं गोमयं नवे शरावे शमीपर्णानि चोपनिहितानि भवन्ति ॥ ३ ॥**

पश्चादग्नेः कारयिष्यमाणः कुमारो मातुरुपस्थे अवस्थापितो[1] भवति । आनडुहं गोमयं नवे शरावे कृत्वा शमीपर्णानि च अन्यस्मिन्नेव शरावे कृत्वा पश्चादग्नेर्निदधाति ॥

अग्नेः पश्चात्कारयिष्यमाणः कुमारः । तत्प्रयुक्तं हि चौलम् । एवं च कृत्वा संस्कारकर्मसु व्यवायपरिहारेषु कार्येषु कुमारोऽन्तरतम इति दर्शितं भवति । मातुरुपस्थे उत्सङ्गे आस्ते । आनडुहं गोमयं नवे शरावे उपनिहितं भवति । शमीपर्णानि चान्यस्मिन् नवे शरावे उपनिहितानि भवन्ति ॥ (३)

**मातुः पिता दक्षिणत एकविंशतिकुशपिञ्जूलान्यादाय ॥ ४ ॥**

तत्र मातुर्दक्षिणतः पिता एकविंशतिकुशपिञ्जूलानि गृहीत्वा आस्ते । अन्ये पुनर्मातुरेव पिता दक्षिणतः स्यात । न[2] अग्नेर्दक्षिणतः । अथ मातृग्रहणं किमर्थम् । मातुर्दक्षिणतः पिता स्यात् । इतरथा अग्नेर्दक्षिणतः स्यात् ॥

मातुर्दक्षिणतः पिता एकविंशतिकुशपिञ्जूलान्यादायास्ते । मातुर्ग्रहणं मातुः सकाशात् दक्षिणतो यथा स्यात् तथा । अग्नेर्दक्षिणतो माभूदिति ॥ (४)

**ब्रह्मा वैतानि धारयेत् ॥ ५ ॥**

ब्रह्मा वैतानि धारयेत् कुशपिञ्जूलानि ॥

एतानि कुशपिञ्जूलानि ब्रह्मा वा धारयेत् यद्यस्ति ॥ (५)

[1] L. omits मातुरुपस्थापितो.

[2] A. L. omit न.

**पश्चात्कारयिष्यमाणस्यावस्थाय शीतोष्णा अपः समानीयोष्णेन वा य उदकेनेहीति ॥ ६ ॥**

कारयिष्यमाणस्य पश्चिमे देशे स्थित्वा शीतोष्णा अपः समानयति उष्णेन वा य उदकेनेहीति अनेन मन्त्रेण। तत्र समानयनं पुनर्युगपदुभाभ्यां पाणिभ्याम्। न तु च दक्षिणकारिता विहन्यते इति ॥

आघारान्तं कृत्वा पूर्वोक्ता आहुतीर्हुत्वा कुमारस्य पश्चिमदेशे स्थित्वा शीतमुदकमुष्णं चोदकमुभाभ्यां पाणिभ्यां गृहीत्वा अन्यस्मिन् पात्रे युगपन्निनयति मन्त्रेण। समित्येकीभावे न तु दक्षिणाङ्गकारितया भाव्यम्। कथमुभाभ्यां पाणिभ्यामिति। उच्यते। अनियमे प्राप्ते नियमार्था या सा परिभाषा न तु दक्षिणाङ्गविधायिका ॥ (६)

**तासां गृहीत्वा नवनीतं दधिद्रप्सान् वा प्रदक्षिणं शिरस्त्रिरुन्दति अदितिः केशान्वपत्वाप उन्दन्तु वर्चस इति ॥ ७ ॥**

तासामपां एकदेशं[1] गृहीत्वा नवनीतं दधिद्रप्सान् वा प्रदक्षिणं शिरस्त्रिरुन्दति[2]। क्लेदयतीत्यर्थः। अदितिः केशान् वपतीत्यनेन मन्त्रेण। तासामिति न वक्तव्यम्। अधिकृतत्वात्तासाम्। नेत्युच्यते। अक्रियमाणे तासां ग्रहणमेव प्राप्नोति। एवं सति समानयनमपार्थकम्। उत्तरार्थं समानयनं स्यात्। शीतोष्णाभिरद्भिरबर्थं कुर्वाण इति। तेन तासांग्रहणमवश्यं कर्तव्यं एकदेशग्रहणार्थम् ॥

तासामपामेकदेशं गृहीत्वा नवनीतं च गृहीत्वा तदभावे दधिद्रप्सान् वा गृहीत्वा प्रदक्षिणं शिरस्त्रिरुन्दति क्लेदयति मन्त्रेण। मन्त्रावृत्तिरुक्ता। तासांग्रहणं

[1] A. L. omit एकदेशं. A. has आपः for अपां.

[2] L. omits all words from दधि and puts इति after नवनीतं

समानीतानां ग्रहणार्थम् । इतरथा समानयनस्य शीतोष्णाभिरद्भिरबर्थमित्यत्र कृतार्थत्वात्तासां ग्रहणमेव न स्यात् गृहीत्वेत्यस्य च नवनीतेन सम्बन्धः स्यात् । तस्मिंस्तु सति आपो नित्याः । नवनीतदधिद्रप्सयोश्च विकल्पः सिद्ध्यति ॥ (७)

**दक्षिणे केशपक्षे त्रीणि त्रीणि कुशपिञ्जूलान्यभ्यात्माग्राणि निदधाति—ओषधे त्रायस्वैनमिति ॥ ८ ॥**

दक्षिणो यः केशपक्षः तस्मिन् केशपक्षे त्रीणि[1] कुशपिञ्जूलान्यभ्यात्माग्राणि निदधाति । कारयिष्यमाणस्याभ्यात्माग्राणि निदधाति । स्थापयतीत्यर्थः । ओषधे त्रायस्वैनमित्यनेन मन्त्रेण ॥

दक्षिणग्रहणं विस्पष्टार्थम् । तस्मिन् केशपक्षे त्रीणि त्रीणि कुशपिञ्जूलानि कुमारस्य अभ्यात्माग्राणि स्थापयति मन्त्रेण । वीप्सा बह्वर्था ॥ (८)

**स्वधिते मैनं हिंसीः—इति लौहेन क्षुरेण ॥ ९ ॥**

स्वधिते मैनं हिंसीरित्यनेन मन्त्रेण लौहेन क्षुरेण निष्पीडयति । अथ लौहेनेति किमर्थम् । क्षुरो लोके[2] लोहमय एव प्रसिद्धः[3] । तस्माल्लोहग्रहणमपार्थकम् । उच्यते । सिद्धो लोहमयः क्षुरः । अत्र स्वयं लोहशब्दोऽक्षविशेषे वर्तते । ताम्रमयेनेत्यर्थः । कथं गम्यते । शास्त्रान्तरदर्शनात् । लोहशब्दश्चायं रजतादिष्वपि वर्तते । अत्र ताम्रे वर्तते ॥

अनेन मन्त्रेण लौहेन क्षुरेण तानि कुशपिञ्जूलानि निष्पीडयति । तेषु क्षुरं स्थापयतीत्यर्थः । लोके क्षुरो लौह एव प्रसिद्धः । अतोऽत्र तस्यावाच्यत्वात्

[1] L. Omits one त्रीणि.
[2] L. Omits लोके.
[3] A. L. सिद्धः

लोहशब्दस्ताम्रे वर्त्तते। शास्त्रान्तरे विहितत्वाच्च। लोके लोहशब्दश्चायं रजतादिष्वपि वर्त्तते। अत्र तु ताम्रे। तथा दृष्टत्वात्॥ (९)

**प्रच्छिनत्ति—येनावपत्सविता क्षुरेण सोमस्य राज्ञो वरुणस्य विद्वान्। तेन ब्रह्माणो वपतेदमस्यायुष्माञ्जरदष्टिर्यथासत्—इति॥१०॥**

येनावपत्सविता क्षुरेणेत्यनेन मन्त्रेण लौहेन क्षुरेण केशान् प्रच्छिनत्ति। प्रशब्दो निपातः। छिनत्तीत्येतदेवोक्तं[1] भवति। अन्ये पुनर्ब्रुवते क्षिप्रार्थमिति॥

ततः अनेन मन्त्रेण तेनैव क्षुरेण प्रच्छिनत्ति। प्रोऽनर्थकः। अनभिप्राय इत्यर्थः। अन्ये क्षिप्रार्थ इत्याहुः॥ (१०)

**प्रच्छिद्य प्रच्छिद्य प्रागग्राञ्छमीपर्णैः सह मात्रे प्रयच्छति। तानानडुहे गोमये निदधाति॥ ११॥**

केशान् प्रच्छिद्य प्रागग्रान् शमीपर्णैः सह कृत्वा मात्रे प्रयच्छति ददातीत्यर्थः। कस्य मात्रे। कुमारस्य। प्रच्छिद्येति वीप्सा क्रियते। कथम्। अत्र यो धर्म उपदिश्यते स सर्वेषु छेदनेषु यथा स्यात्। प्रागग्रानिति। तेषां कुशपिञ्जूलानां स्थाप्यमानानामपि प्रागग्रता विधीयते। को ददाति। यः करोति। गृहीत्वासौ माता आनडुहे गोमये निदधातीति। तेन केशान् शमीपर्णैः सहितानानडुहे गोमये निदधाति स्थापयतीत्यर्थः। अत्र नियमो नास्ति प्रागग्रतोदगग्रतायाः। तेन यथाभिप्रेतं स्थापयति॥

[1] A. L. छिनत्त्येतदेवोक्तम्.

प्रच्छिद्य प्रच्छिद्येति वीप्सावचनं यो यत्र धर्म उपदिश्यते स सर्वेषु छेदेषु यथा स्यादिति । प्रागग्रान् कृत्वा शमीपर्णैः सह एकीकृत्य मात्रे प्रयच्छति ददाति । तानमौ आनडुहे गोमये निदधाति स्थापयति । नात्र प्रागग्रतानियमः ॥ (११)

**येन धाता बृहस्पतेरग्नेरिन्द्रस्य चायुषेऽवपत् । तेन ते आयुषे वपामि सुश्लोक्याय स्वस्तये—इति तिद्वीयं । येन भूयश्चरात्यं ज्योक् च पश्याति सूर्यम् । तेन ते आयुषे वमापि सुश्लोक्याय स्वस्तये—इति तृतीयम् ॥**

येन धाता इत्यनेन मन्त्रेण द्वितीयं प्रच्छिनत्ति । दक्षिणे केशपक्षे इत्येतद्वर्तते । येन भूय इति । येन भूयश्चरात्यं इत्यनेन मन्त्रेण तृतीयं प्रच्छिनत्ति । द्वितीयं तृतीयमिति मन्त्रान्तोपदेशार्थम् । ननु च इतिना[1] मन्त्रान्तः प्रदृश्यते । नेत्युच्यते । इतिकारो मन्त्रमध्येऽपि क्वचिद्दृश्यते । यथा आसीद सदनं स्वमिति मा हिंसीर्देवप्रेरित इति । अथ क्रमार्थं द्वितीयग्रहणम् ॥

सङ्ख्यावचनं मन्त्रान्तप्रदर्शनार्थम् । मन्त्रमध्येऽपीतिकारो विद्यते इत्युक्तम् । कुशपिञ्जूलनिधानस्याभ्यात्मविधानार्थं भवितुं नार्हति । अभ्यासस्य त्रीणि त्रीणि इति वीप्सयैव सिद्धत्वात् ॥ (१२)

**सर्वैर्मन्त्रैश्चतुर्थम् ॥ १३ ॥**

पूर्वोक्तैः सर्वैर्मन्त्रैः चतुर्थं छिनत्ति ॥

सर्वैस्त्रिभिर्मन्त्रैश्चतुर्थवारं छिनत्ति ॥ (१३)

[1] A. L. इति.

**एवमुत्तरतस्त्रिः ॥ १४ ॥**

यथा दक्षिणप्रच्छेदनं कृतं उत्तरत[1] अप्येवमेव करोति । अयं तु विशेषः—त्रिः करोति ॥

यथा दक्षिणे केशपक्षे एवमुत्तरेऽपि केशपक्षे कुर्यात्त्रिः । परिसंख्येयम् । उत्तरे केशपक्षे त्रिरेव । न चतुर्थमिति ॥ (१४)

**क्षुरतेजो निमृजेत्—यत् क्षुरेण मर्चयता सुपेशसा वप्ता वपसि केशान् । शुन्धि शिरो मास्यायुः प्र मोषीः—इति ॥ १५ ॥**

क्षुरतेजो निमृजेत् यत्क्षुरेण मर्चयता इत्यनेन मन्त्रेण । तेजः धारेत्युच्यते । निमृजेदिति शोधयेदित्यर्थः ॥

ततः क्षुरधारां निमृजेत् शोधयेत् मन्त्रेण । निमार्जनमवमार्जनम् । न्यवेति विनिग्रहार्थीयाविति वचनात् ॥ (१५)

**नापितं शिष्याच्छीतोष्णाभिरद्भिरवर्थं कुर्वाणोऽक्षुण्वन् कुशलीकुर्विति ॥ १६ ॥**

उपदिशेदित्यर्थः । किमिति । शीतोष्णाभिरद्भिरवर्थं कुर्वाणोऽक्षुण्वन् कुर्विति । एवं ब्रूयात् । क्रियां वास्य निर्दिशेदिदं कुर्विति ॥

नापितं शिल्पिनं शिष्यात् प्रेष्येत्प्रैषेण । कुशलीकरणवचनं विपरीतलक्षणया वापने वर्तते । येन विहितोऽयं मुण्डयति हि श्रूयते ॥ (१६)

[1] A. L. उत्तरा.

यथाकुलधर्मं केशवेशान् कारयेत् ॥ १७ ॥

स्वेन कुलधर्मेण केशवेशाः कर्तव्याः। तत्र पृथुकाचिरकादीनित्यर्थः ॥

एकशिखः त्रिशिखः पञ्चशिखो वा इति बोधायनः। पूर्वशिखः परशिख इति कुलधर्माः। तेषु यो यस्य कुलधर्मः तेन तस्य केशसन्निवेशान् कारयेत्। ततः स्विष्टकृदादि समापयेत्। वेषानित्यपि पाठे स एवार्थः ॥ (१७)

आवृतैव कुमार्य्यै ॥ १८ ॥

कुमार्यै आवृता चौलकर्म कर्तव्यम्। आवृतेति किमुच्यते। समन्त्रकं कर्म। कथं ज्ञायते। येनान्यत्र तूष्णीमित्याहुः। के पुनरिति। अपरद्वारा नित्ययावृतेति उक्त्वा तूष्णीं प्रति प्रसर्पन्तीत्याहुः। तेन ज्ञायते सर्वस्य कर्मण उपदेश इति। यद्येवं स्यात् तेनैवोपदेशं कुर्यात्। कस्मात्। अविशेषाभिधानादुभयोः प्राप्नुयात्। तदेतन्नोपपद्यते। किं कारणम्। कुमाराधिकारात्। कुमारं जातमिति वचनात्। तेन विशेषोपदेशः। यद्येवं कुमार्याश्चेत्येवमस्तु। यत्तस्या न ग्रहणं करोति तेन मन्यामहे—अविशेषेण भवितव्यम्। किंतु एवकारश्चात्र विद्यते। तस्मादावृतैवात्र भवति। न मन्त्रः। यदुक्तं अन्येष्वावृद्ग्रहणेषु[1] मन्त्र इति तन्न विलक्षणत्वान्निर्देशस्य। तत्रावृद्ग्रहणमात्रमेव[2]। अत्र त्वेवकारः क्रमार्थ एव। तस्मात् कर्मणा भवितव्यम्। न मन्त्रेण[3]। एवं ते ब्रुवतो[4]

[1] A. L. अन्येष्वपि ग्रहणेषु.

[2] A. तत्रापि ग्रहणमात्रमेव. L. तत्र पाणिग्रहणमात्रमेव.

[3] A. L. न कर्मणा.

[4] A. L. एवं नैव कुर्वतो.

दोषः[1] प्राप्नोति। तूष्णींभूतस्य तत्रैके प्रतिपन्नाः। भवति होमः अमन्त्रक इति। वयं तु नैवम्। किं कारणम् अदृष्टत्वात्। तस्मात्कर्मैव भवति न होमः। तूष्णीं द्वितीये उभयत्रेति तत्र अमन्त्रकः प्राक्कृतो होमः। इह त्वमन्त्रकस्य प्रवृत्यैव भवितव्यं नोपपद्यते। तस्मादावृन्मात्रं भवति। आवृत्युक्तार्थम्। अत्र तु होमं केचिदिच्छन्ति। होमेन भवितव्यं। कस्मात् अविशेषात्। कर्मग्रहणाच्च। अन्ये आवृद्ग्रहणात् होमं नेच्छन्ति। तूष्णीं होमो नास्ति॥

आवृता अमन्त्रकमित्यर्थः। कुतः। येनान्यत्र आवृतेत्युक्त्वा तूष्णीमित्याह। अपरया द्वारा नित्ययावृता सदो द्वार्ये चाभिमृश्य तूष्णीं प्रतिप्रसर्पन्तीति। नैतदेवम्। एवकारोऽत्रावधारणार्थः। आवृत्तन्त्रमेव भवति न मन्त्र इति। तेनावृतेत्यस्य तूष्णीमित्ययमर्थ इति सिद्धम्। एवञ्चेद्दोषः। अमन्त्रकं होमः प्राप्नोति। इष्टमेव न एतदिति केचिदाहुः। अन्ये होमो न भवतीत्याहुः। अमन्त्रकस्य होमस्य क्वचिदप्यदृष्टत्वात्। ननु तूष्णीं द्वितीये उभयत्रेत्यत्र दृष्ट इति शङ्का न कार्या। तत्रापि प्रजापतये स्वाहा इति मन्त्रोऽस्त्येव॥ (१८)

**इति प्रथमे सप्तदशी कण्डिका**

---

**एतेन गोदानं॥ १॥**

एतेनेति चौलकर्मोपदिश्यते। एतेन चौलकर्मणा गोदानं व्याख्यातम्॥

[1] A. L. होमः for दोषः

व्याख्यातमिति शेषः । एतेनेति कृत्स्नोपदेशः ॥ (१)

तत्र विशेषमाह—

**षोडशे वर्षे ॥ २ ॥**

विशेषान् वक्ष्यामः ॥

तृतीयस्यापवादः । अत्र मातुरुपस्थोपवेशनं न भवति । अयुक्तत्वात् ॥ (२)

**केशशब्दे तु श्मश्रुशब्दान् कारयेत् ॥ ३ ॥**

ये तु केशशब्दाः तेषु श्मश्रुशब्दाः कर्तव्याः । तत्र केशशब्दाः अदितिः केशान् वपत्विति । वप्त्रा वपसि केशानिति च । अथ कस्मादयं विलक्षणो निर्देशः । एकत्रैकवचनेन अन्यत्र बहुवचनेन । केशशब्द इत्येकवचनेन श्मश्रुशब्दानिति बहुवचनेन ब्रवीति । अविवक्षितमेवेदं बहुवचनम् । जातिपरत्वान्निर्देशस्य उभयत्रापि भवति । जातिपरो निर्देशः । नेत्युच्यते । लोकप्रसिद्ध एवायं शब्दः । श्मश्रूणि वापयति[1] केशान्निकृन्ततीति । द्वौ वेह केशशब्दौ[2] । विलक्षणनिर्देशं कुर्वन्नेतत् ज्ञापयति । विधिगतस्यापि केशशब्दस्य स्थाने श्मश्रुशब्दः प्रतीयते इति । कः पुनरसौ विधिगतः केशशब्दः । दक्षिणे केशपक्षे इति । तेनेहापि दक्षिणे श्मश्रुपक्षे इत्येतत्सिद्धं भवति[3] ॥

[1] A. L. कारयति.

[2] A. वेह केशशब्दे L. वेहशब्दे.

[3] L. omits भवति.

केशशब्दे त्विति जातावेकवचनम्। श्मश्रुशब्दानिति व्यक्तिपरो निर्देशः। तेन त्रयः श्मश्रुशब्दाः। तत्र अदितिः केशान्वपतु। वप्ता वपसि केशान्। दक्षिणे केशपक्षे। इति त्रिषु ते कार्याः। तन्त्रगतस्य तृतीयस्य केशशब्दस्याभावाद्विधिगतस्य ग्रहणम्। तेन दक्षिणे श्मश्रुपक्षे इति साधितं भवति॥ (३)

**श्मश्रूणीहोन्दति ॥ ४ ॥**

इह तु श्मश्रूणां उन्दनेन[1] तु क्लेदनं केशानां दृष्टम्। तदिह श्मश्रूणां विधीयते। तेन नात्र समुच्चयः। इहशब्देन श्मश्रूणामिहोन्दनं भवति न केशानाम ॥

शिर उन्दनस्यापवादः ॥ (४)

**शुन्धि शिरो मुखं मास्यायुः प्रमोषीः—इति ॥ ५ ॥**

क्षुरमार्जनेऽधिकारो भवति ॥

क्षुरनिमार्जनेऽयं विशेषः ॥ (५)

**केशश्मश्रुलोमनखान्युदक्संस्थानि संप्रव्यति ॥ ६ ॥**

अस्य संप्रेषस्य क्व निवेशो भवति। किंमादौ[2] मध्ये अन्त्ये इति। आदौ तावत्प्राप्नोति। यद्यत्पश्चादुपदिश्यते तत्तदादावेव निवेश्यते इति। यथाग्नीध्रस्य तृतीयत्वे प्राप्ते प्रतिप्रस्थाता तृतीयो भवति एवमिहापि भवितव्यम्। तदेतन्नोपपद्यते। संख्याचोदितानामेतदेव भवति। नियम-

[1] A. मुण्डनेन L. मुण्डनं.

[2] A. L. किंचादौ.

स्थानानां वा। तेनोभयोरभावात् अन्ते एव निवेशो भवति। केशश्मश्रु-लोमनखान्युदक्संस्थानि कुर्वित्यन्ते उपदेशकः शब्दः॥

शीतोष्णाभिरद्भिरवर्थं कुर्वाणोऽक्षुण्वन् कुशली केशश्मश्रुलोमनखान्युदक्-संस्थानि कुर्विति नापितशासनम्॥ (६)

**आप्लुत्य वाग्यतः स्थित्वाहःशेषमाचार्यसकाशे वाचं विसृजेत वरं ददामीति॥ ७॥**

आप्लुत्य स्नात्वेत्यर्थः। वाग्यत इति मौनेनाहःशेषं तिष्ठतीति। आचार्यसकाशे वाचं विसृजेत। किमिति वाग्विसर्गो भवति। वरं ददा-मीति॥

तत आप्लुत्य स्नात्वेत्यर्थः। वाग्यत इत्यमन्त्रयमाणः। स्थित्वेत्युपवेशन-प्रतिषेधः। एवमहःशेषं स्थित्वास्तमिते आचार्यसमीपे वरं ददामीति वाचं विसृजेत्॥ (७)

वरद्रव्यमाह—

**गोमिथुनं दक्षिणा॥ ८॥**

ददाति॥

ननु भिक्षुरयम्। कथमस्य गोमिथुनसम्भवः। उच्यते। यथास्य प्रावर-णादिसम्भवस्तथैतस्यापि॥ (८)

**संवत्सरमादिशेत्॥ ९॥**

एतत्कर्म कृत्वा संवत्सरं व्रतमादिशेत्। तत्र कस्मिन्[1] काले व्रतादेशनं कर्तव्यम्। कुतः संशयः। रात्रिरधिकृता[2]। रात्रौ तद्व्रतादेशनाभावः[3]। कस्मात्। अविहितत्वात्। तेन व्रतादेशनं पूर्वं कृत्वा संवत्सरान्ते इष्टं कर्म कुर्वन्ति। एवमेके। तत्र नैवम्। संवत्सरान्ते अन्यस्य कर्मणो विधानात्। तेनेह गौदानिकं कर्म कृत्वा अन्यस्मिन्नहनि व्रतादेशनं कर्तव्यम् ॥

एवं गोदानं कृत्वा संवत्सरं व्रतमादिशेत् वक्ष्यमाणेन विधिना चरेत्। रात्रौ व्रतादेशनानुपपत्तेः अपरेद्युः कार्यम् ॥ (९)

इति प्रथमे अष्टादशी कण्डिका

---

**अष्टमे वर्षे ब्राह्मणमुपनयेत् ॥ १ ॥**

जन्मनः प्रभृत्यष्टमे वर्षे ब्राह्मणस्योपनयनं कर्तव्यम्। कथं ज्ञायते। जाताधिकारात्। कुमारस्य चोपनयनं कर्तव्यम्। कुमाराधिकारः कुमारीनिवृत्यर्थः। अनुवर्तते यद्येवं नार्थोऽधिकारेण पुंलिङ्गोपदेशात्। ब्राह्मणमुपनयेदिति कुमारस्यैव प्राप्नोति। नेत्युच्यते। जातिनिर्देशे च लिङ्गवचने अविवक्षिते। तद्यथा। ब्राह्मणो न हन्तव्य इति। एवं[4] ब्राह्मण्यपि

[1] A. L. तस्मिन्.

[2] A. एधिकृता L. संवत्सरोपिकृता.

[3] तत्ताताादेशभावः

[4] Before एवं A. has एवं ब्राह्मणो न हन्तव्य इति extra.

न हन्येत । एवमिहापि ब्राह्मण्या अप्युपनयनं प्राप्नोति यद्यधिकारो नानुवर्तते ॥

जन्मप्रभृत्यष्टमे वर्षे ब्राह्मणमुपनयेत् । कुमारमिति वर्तते कुमारीनिवृत्त्यर्थमित्युक्तम् ॥ (१)

गर्भाष्टमे वा ॥ २ ॥

गर्भाष्टमे वा ब्राह्मणस्योपनयनं कर्तव्यम् । स्मृतिदृष्टेन वायमर्थः । पुनः संख्या विधीयते । इह तु जन्मनोऽधिकारात् जातस्यैव संख्या प्राप्नोति । तस्मात् गर्भादिरित्यारभ्यते ॥

गर्भप्रभृत्यष्टमे वोपनयेत् ॥ (२)

एकादशे क्षत्रियम् ॥ ३ ॥

एकादशे वर्षे क्षत्रियमुपनयेत् । गर्भैकादशे वचनमस्ति । न त्वधिकारात् । गर्भाष्टमे इति गर्भैकादशे इति प्राप्नोति । एवमुत्तरस्यापि विधिः साध्यते ॥

जन्मप्रभृति गर्भप्रभृति वा एकादशे वर्षे क्षत्रियमुपनयेत् ॥ (३)

द्वादशे वैश्यम् ॥ ४ ॥

द्वादशे वर्षे वैश्यमुपनयेत् । गर्भद्वादशे वा । ब्राह्मणादीनामेतेष्वेव कालेषूपनयनं भवति । अन्यस्मिन्नपि लभ्यते इत्यत आह ॥

जन्मप्रभृति गर्भप्रभृति वा द्वादशे वर्षे वैश्यमुपनयेत् ॥ (४)

**आ षोडशात् ब्राह्मणस्यानतीतः कालः ॥ ५ ॥**

अष्टमाद्वर्षादारभ्य यावत्षोडशवर्षमिति तावदुपनयनं लभ्यते। तत्राकारोऽयमभिविधौ ॥

षोडशवर्षपर्यन्तं ब्राह्मणस्योपनयनकालोऽतीतो न भवति ॥ (५)

**आ द्वाविंशात् क्षत्रियस्य। आ चतुर्विंशात् वैश्यस्य। अत ऊर्ध्वं पतितसावित्रीका भवन्ति ॥ ६ ॥**

एभ्यः संवत्सरेभ्यः षोडशद्वाविंशचतुर्विंशेभ्य[1] ऊर्ध्वं अनुपनीतास्ते पतितसावित्रीका नाम भवन्ति। संज्ञाप्रयोजनं पतितसावित्रीक उद्दालव्रतं चरेदिति ॥

षोडशद्वाविंशचतुर्विंशपर्यन्तेषु अनुपनीताश्चेत् पतितसावित्रीकाः भवन्ति। संज्ञायाः प्रयोजनं पतितसावित्रीक उद्दालकव्रतं चरेदिति। अत ऊर्ध्वमिति वचनं पूर्वसूत्रेष्वाकारा अभिविधाविति ज्ञापनार्थम् ॥ (६)

**नैनानुपनयेन्नाध्यापयेन्न याजयेन्नैभिर्व्यवहरेयुः ॥ ७ ॥**

नैनानुपनयेदिति ; एते पतितसावित्रीका उपनयनादिसंस्कारैर्न संस्कर्तव्याः अचीर्णप्रायश्चित्ताः। तत्र किमर्थं सर्वे एतैः सम्बध्यन्ते। उपनयनप्रतिषेधे सर्वाणि हि प्रतिषिद्धानि[2] भवन्ति। अत्रोच्यते।

[1] L. omits द्वाविंश.

[2] L. प्रसिद्धानि.

कयाचिद्युक्त्या लोभादज्ञानाद्वोपनीतस्यापि सतः अचीर्णप्रायश्चित्तस्य नैवोत्तराणि कर्तव्यानीत्येवमर्थं सर्वेषामनुक्रमेण क्रियते ॥

अचीर्णप्रायश्चित्तानिति शेषः। उपनयनप्रतिषेधादेव सर्वत्र प्रतिषेधे सिद्धे यदि केनचिल्लोभादज्ञानाद्वोपनीताः स्युः तथापि नैवोत्तराणि कर्माणि पतितसावित्रीकाणां कुर्यादिति सर्वेषां पाठः क्रियते ॥ (७)

**अलङ्कृतं कुमारं कुशलीकृतशिरसमहतेन वाससा संवीतमैणेयेन वाजिनेन ब्राह्मणं रौरवेण क्षत्रियमाजेन वैश्यम् ॥ ८ ॥**

तत्र कुमारस्य अलंकरणं भूषणादीत्येतदुक्तं भवति। कुशलीकृतशिरसमिति वापितशिरसमित्यर्थः। अहतेन वाससा संवीतं नवेन वाससा प्रावृतमित्यर्थः। ऐणेयेन वाजिनेन ऐणेयेन वा चर्मणा प्रावृतं ब्राह्मणम्। रौरवेण क्षत्रियं रौरवेण चर्मणा क्षत्रियं प्रावृतम्। आजेन चर्मणा प्रावृतं वैश्यम्। तत्रैतानि चर्माणि वासोभिर्विकल्प्यन्ते। उभयेषां प्रावरणार्थत्वात् ॥

कुशलीकृतशिरसं वापितशिरसमित्यर्थः। अहतं नवम्। अपुराणमनुपभुक्तमित्यर्थः। तेन वाससा संवीतं प्रावृतमित्यर्थः। ऐणेयेन वा अजिनेन चर्मणा प्रावृतं ब्राह्मणमानीय होमं कुर्यात्। एवमुत्तरत्रापि नेयम्। एतानि चर्माणि वाससा सह विकल्प्यन्ते। उभयेषां प्रावराणार्थत्वात् वाशब्दाच्च ॥ (८)

**यदि वासांसि वसीरन् रक्तानि वसीरन् काषायं ब्राह्मणो माञ्जिष्ठं क्षत्रियो हारिद्रं वैश्यः ॥ ९ ॥**

यदिशब्दोऽयमनित्यार्थः[1]। एवं सति वाससा वसनमनित्यं प्राप्नोति। यदा च प्राप्नुवन्ति तदा रक्तान्येव न शुक्लानि। नेनान्यथा

[1] A. L. यदिशब्दोऽयमित्यर्थः

विन्यासं करिष्यामः । वासांसि वसीरन् । तेन वाससां नियतं वसनम्[1] । यदिशब्देन त्विदं[2] रक्तानामनित्यत्वं ज्ञापयति । यदिशब्दो निदर्शयति । यदि रक्तानि काषायं ब्राह्मण इत्येवमादिविभागः । काषायं ब्राह्मणस्यैव नियम्यते । एवमुत्तरयोः ॥

वासांसि वसीरन्नित्येवं सूत्रच्छेद इष्टः । वासांसि वसीरन् परिदध्युरित्यर्थः । यदीत्युत्तरेण सम्बध्यते । तेन नियमेन परिधानं सिद्धम् । पक्षे शुक्लान्यपि सिद्ध्यन्ति । यदि रक्तानि वसीरन् काषायं ब्राह्मणः माञ्जिष्ठं क्षत्रियः हारिद्रं वैश्यः । एवं रक्तानां वसनमनित्यं । तथा च गोतमः—वासांसि क्षौमचीरकुतपाः सर्वेषां कार्पासं वाविकृतं काषायमप्येके वार्क्षं ब्राह्मणस्य माञ्जिष्ठहारिद्रे इतरयोः— इति ॥ (९)

**तेषां मेखलाः ॥ १० ॥**

भवन्ति ॥

उच्यन्ते इति शेषः ॥ (१०)

**मौञ्जी ब्राह्मणस्य धनुर्ज्या क्षत्रियस्य आवी वैश्यस्य ॥ ११ ॥**

ब्राह्मणस्यैव मौञ्जी । नान्यस्य । एवमुत्तरयोः क्षत्रियवैश्ययोः ॥

मौञ्जी ब्राह्मणस्य नान्यस्य । ब्राह्मणस्य तु मौञ्जी वान्या वा । न नियमः । एवमुत्तरयोर्ज्ञेयम् ॥ (११)

[1] A. वाससां नियमो वसने. L. वाससा नियतो वसाने.

[2] A. L. त्वयं

तेषां दण्डाः ॥ १२ ॥

तेषां दण्डा ॥

उच्यन्ते इति शेषः ॥ (१२)

पालाशो ब्राह्मणस्य । औदुम्बरः क्षत्रियस्य । बैल्वो वैश्यस्य । केशसंमितो ब्राह्मणस्य । ललाटसंमितः क्षत्रियस्य । प्राणसंमितो वैश्यस्य ॥ १३ ॥

दण्डादिनियमो मेखलाभिर्व्याख्यातः ॥

दण्डनियमो मेखलाभिस्तुल्यः ॥ (१३)

इति प्रथमे एकोनविंशतितमा कण्डिका

---

सर्वे वा सर्वेषां ॥ १ ॥

सर्वे वा दण्डाः[1] सर्वेषां विकल्पेन भवन्ति । पालाशो ब्राह्मणस्येत्येवमादयः ॥

सर्वे दण्डाः सर्वेषां भवति पालाशादयः ॥ (१)

[1] A. repeats सर्वे वा दण्डाः

**समन्वारब्धे हुत्वोत्तरतोऽग्नेः प्राङ्मुख आचार्योऽवतिष्ठते ॥ २ ॥**

समन्वारब्धे जुहोति आचार्यः । कस्मिन्[1] समन्वारब्धे । कुमारे । कस्मात् । अधिकृतत्वात् । हुत्वा उत्तरतोऽग्नेः प्राङ्मुख आचार्योऽवतिष्ठते ॥

आज्यस्य बर्हिष्यासादनान्तं कृत्वा समन्वारब्धे ब्रह्मचारिणि इध्माधानाघारान्तं कृत्वा पूर्वोक्ताज्याहुतीर्हुत्वा उत्तरतोऽग्नेः प्राङ्मुख आचार्योऽवतिष्ठते । ब्रह्मचारी तु तीर्थेन प्रविश्य आचार्यस्य दक्षिणत उपविशेत् । तीर्थं नाम प्रणीतानां पश्चिमो देशः । सर्वत्र तीर्थेनैव प्रविश्य कर्म कुर्यात् ॥ (२)

**पुरस्तात् प्रत्यङ्मुख इतरः ॥ ३ ॥**

पुरस्तादाचार्यस्य प्रत्यङ्मुखोऽवतिष्ठते इतरः कुमारः ॥

आचार्यस्य पुरस्तात् प्रत्यङ्मुखो ब्रह्मचारी अवतिष्ठते ॥ (३)

**अपामञ्जली पूरयित्वा—तत् सवितुर्वृणीमहे—इति पूर्णेनास्य पूर्णमवक्षारयत्यासिच्य—देवस्य त्वा सवितुः प्रसवेऽश्विनोर्बाहुभ्यां पूष्णो हस्ताभ्यां हस्तं गृह्णाम्यसौ—इति तस्य पाणिना पाणिं साङ्गुष्ठं गृह्णीयात् ॥ ४ ॥**

स्थित्वा अपामञ्जली पूरयित्वा आचार्य आत्मनः कुमारस्य च । तत्रार्थादाचार्यस्यान्यः पूरयति । तत्सवितुर्वृणीमहे इत्येतयर्चा पूर्णेनाञ्जलिना आचार्यः पूर्णमञ्जलिमवक्षारयति कुमारस्य आसिच्य । देवस्य त्वेत्यनेन मन्त्रेण तस्य कुमारस्य पाणिना पाणिं साङ्गुष्ठं गृह्णीयात् । अथोदासेचने

[1] A. L. omit कस्मिन्.

सिद्धे किमर्थमासेचनग्रहणं पुनः क्रियते । तत्रेदं प्रयोजनम् । कथमाचार्य आसेचनं कुर्यात् । असाविति सर्वनामनिर्देशस्थाने विभक्त्यर्थः ॥

अपामुभयोरञ्जली पूरयित्वा स्वस्य पूर्णेनाञ्जलिनास्य पूर्णमञ्जलिमवक्षारयति तत् सवितुर्वृणीमहे इति मन्त्रेण । ब्रह्मचारिणोऽञ्जलौ आत्मनोऽञ्जलिमवसिञ्चती-त्यर्थः । ततो देवस्य त्वेति मन्त्रेण तस्य पाणिं साङ्गुष्ठं गृह्णीयात् । आचार्याञ्जलि-मर्थादन्यः पूरयति । आसिच्येति वचनं कथं आचार्योऽवक्षारणं कुर्यात् न कुमार इत्येवमर्थम् । इतरथा पूर्णेनास्य पूर्णमवक्षारयतीत्युक्ते कस्याञ्जलिं को-ऽवक्षारयतीति सन्देहः स्यात् । आसिच्येति वचने तूच्यमाने समानकर्तृकत्व-निर्देशात् यः पाणिं गृह्णाति सोऽवसिञ्चतीति ज्ञायते । तेनाचार्योऽवक्षारयतीति सिद्धम् । असावित्यस्य स्थाने सम्बुद्ध्या ब्रह्मचारिनाम ब्रूयात् ॥ (४)

**सविता ते हस्तमग्रभीदसौ—इति द्वितीयम् । अग्निराचार्य-स्तवासौ—इति तृतीयम् ॥ ५ ॥**

सविता ते इत्यनेन मन्त्रेण द्वितीयं पाणिं गृह्णाति । अग्निराचार्य-स्तव इति तृतीयं पाणिं गृह्णाति ॥

सङ्ख्यावचनं प्रथमहस्तग्रहणदृष्टाञ्जलिपूरणादिधर्मप्राप्त्यर्थम् ॥ (५)

**आदित्यमीक्षयेत—देव सवितरेष ते ब्रह्मचारी । तं गोपाय । स मामृता—इत्याचार्यः ॥ ६ ॥**

आदित्यमीक्षयेत देव सवितरित्यनेन मन्त्रेण । आचार्य इमं मन्त्रं ब्रूते[1] । तत्रैके द्विधैनं[2] मन्त्रं कुर्वन्ति । देवसवितरेष ते ब्रह्मचारी । तं गोपाय

[1] A. ब्रवते.

[2] A. तत्रैके द्वि (ब्रूते तत्र केचि)चैनं.

इति आचार्यस्य भवति। स मामृतेति ब्रह्मचारिण इति। अनेन मन्त्रेण आचार्यमीक्षते इति। एवमेके कर्मेदं प्रतिभाष्यन्ते विप्रतिपन्नाः। तदेतन्नोपपद्यते द्विधाकरणम्। मन्त्रस्याविभक्तत्वान्मन्त्रविभागकरणं नास्ति। न मन्त्रविभागः स्यात्। ननु च अनितिका[1] अपि मन्त्रा भवन्ति। रथारोहे[2] चक्रयोरधिष्ठानस्य च यथा[3] भिन्न इति। नास्ति। एवमिहापि। तदेतन्नोपपद्यते। कस्मात्। तुल्यत्वात्तत्र। स एव प्रयोक्ता उभयोर्मन्त्रयोः। इह तु कर्त्रन्तरम्[4]। तस्मात्[5] एकमिच्छन्ति[6]। ननु च येऽप्येकमिच्छन्ति[7] तेषामप्याचार्यग्रहणमकर्तव्यम्[8]। कस्मात्। आचार्यस्यैवायं[9] मन्त्रो भविष्यतीति यथान्येषु[10] मन्त्रेषु। तत्तु क्रियते ज्ञापकार्थम्। अन्यत्र कृण्वन्तीक्षितुं मन्त्रो यथा स्यात्। भुक्तवन्तमपामञ्जलिपूर्णमादित्यमुपस्थापयेत् त्वं व्रतानाम्—इत्ययम्। तस्मादाचार्यग्रहणमपि कर्तव्यम्। आचार्यस्यैवायं मन्त्रो भवतीति साधितम्॥

ततो ब्रह्मचारिणमादित्यमीक्षयेत् मन्त्रेणाचार्यः। आचार्यग्रहणं ज्ञापनार्थम्। अन्यत्रेक्षणे ब्रह्मचारिणो मन्त्रो नाचार्यस्येति। तेनादित्यमीक्षयेत्। मित्रस्य त्वा चक्षुषा प्रतीक्षे इत्यत्र ब्रह्मचारिणो मन्त्रः सिद्धः॥ (६)

[1] A. अनतिका. L. अनतिका.

[2] L. यथा रोगे.

[3] L. वयवा.

[4] L. कर्मान्तरम्.

[5] A. L. य for तस्मात्.

[6] A. L. एवमिच्छन्ति.

[7] L. omits ननु च up to इच्छन्ति.

[8] A. L. तेषामाचार्यग्रहणं कर्तव्यम्.

[9] L. omits एव.

[10] A. L. यथा पुनरेषु.

**कस्य ब्रह्मचार्यसि । प्राणस्य ब्रह्मचार्यसि । कस्त्वा कमुपनयते । काय त्वा परिददामि । इति ॥ ७ ॥**

कस्य ब्रह्मचार्यसि इत्ययं चाचार्यस्यैव भवति मन्त्रः । कस्मात् । अधिकृतत्वात् । प्रदानसंयोगाच्च[1] । प्रजापतयेऽसौ ब्रह्मचारी प्रदीयते प्रजापतिना[2] उपनीतोऽसाविति । एतदुक्तं भवति ॥

जपेदितिशेषः मन्त्रलिङ्गात् । प्रजापतये ब्रह्मचारी प्रदीयते । तेनाचार्यस्यायं मन्त्रः ॥ (७)

**युवा सुवासाः परिवीत आगादित्यर्द्धर्चेनैनं प्रदक्षिणमावर्तयेत्॥८॥**

युवा सुवासा इत्यर्धर्चेनैनं प्रदक्षिणं ब्रह्मचारिणमावर्तयेत्[3] । एनमिति प्राप्नोति[4] । कस्मात् । अधिकृतत्वात् । तन्न प्रारभ्यते कथमावर्तयितुर्मन्त्रः स्यान्नावर्त्यमानो ब्रूयात् कुमारः[5] ॥

अनेनार्द्धर्चेन एनं ब्रह्मचारिणं प्रदक्षिणमावर्तयेत् । एनमिति वचनं कथं आवर्तयितुर्मन्त्रः स्यान्नावर्त्यमानो ब्रूयात् कुमार इत्येवमर्थम् । अर्द्धर्चग्रहणमृङ्निवृत्त्यर्थं । अन्यथा ऋचं पादग्रहणे इत्यृक् स्यात् ॥ (८)

**तस्याध्यंसौ पाणी कृत्वा हृदयदेशमालभेतोत्तरेण ॥ ९ ॥**

[1] L. omits प्रदानसंयोगाच्च.

[2] A. L. प्रजापतिनासौ.

[3] L. omits णं ब्रह्मचारिण.

[4] A. L. न प्राप्नोति.

[5] A. मन्त्रं न आनम्यान्नावर्तमानो ब्रूयात् तं कुमारम् .

तस्य ब्रह्मचारिणः अध्यंसौ । अधीत्युपरिभावे । अंसयोरुपरि[1] पाणी कृत्वा अंसयोः हृदयदेशमालभेतोत्तरेणार्धर्चेन या प्रकृता ऋक् । आलभेतेत्युक्तं भवति ॥

अधीत्युपरिभावे । ब्रह्मचारिणोऽसयोरुपरि स्वस्य पाणी कृत्वा तस्य हृदयदेशं स्पृशेदुत्तरेणार्द्धर्चेन ॥ (९)

**अग्निं परिसमूह्य ब्रह्मचारी तूष्णीं समिधमादध्यात् तूष्णीं वै प्राजापत्यम् । प्राजापत्यो ब्रह्मचारी भवति इति विज्ञायते ॥ १० ॥**

तत्र परिसमूह्येत्येतदपार्थकम् । कस्मात् । प्रकृतत्वात् । अग्नेः संस्कारार्थं परिसमूहनं क्रियते । संस्कृतश्चायमग्निः तेनाग्निं परिसमूह्येति । सकृन्मन्त्रमारब्धम्[2] । तदिदमारम्भप्रयोजनं भवति । अन्यार्थमारभ्यते । कस्मात् । तत्रैवारभ्यते[3] यत्र प्रयोजनमिति । प्रकरणमुपजीवन्नाचार्य इहारभते[4] । प्रथमं चेदं समिदाधानम् । तस्मादत्रापि प्रारब्धम् । किं पुनः प्रयोजनमिति । सायं प्रातः समिधमादध्यादित्यत्र । ब्रह्मचारिग्रहणमाचार्यनिवृत्त्यर्थम्[5] । अतश्च ज्ञापितं भवति ब्रह्मचारिग्रहणात् यथा आचार्यस्यैव पूर्वमन्त्रा भवन्तीति । तूष्णीं यत्कर्म क्रियते तत प्राजापत्यम् । विज्ञायते इति ब्राह्मणम् । यस्मात् प्राजापत्यो ब्रह्मचारी तस्मात् तूष्णीं समिधमादधाति । कथं पुनः प्राजापत्यो ब्रह्मचारी भवतीति विज्ञायने । यस्मादयं

[1] A. L. here only न instead of अंसयोरुपरि.

[2] A. L. सकृन्मन्त्रारब्धम्.

[3] A. तत्रैव नारभ्यते । L. तत्रैवमारभ्यते.

[4] A. इहारभ्यते L. मारभ्यते for इहारभते.

[5] L. अपार्थकं extra before आचार्य.

परिदत्तः[1] । कस्त्वा कमुपनयते । काय त्वा परिददामीत्यनेन प्राजापत्यः संवृत्तः । सर्वत्र च प्राजापत्याहुतिषु तूष्णीमेवोपदेशः । तेनोपपद्यते तेषां[2] प्राजापत्या ब्रह्मचारीति ॥

अत्र परिसमूहनमनर्थकं संस्कृतत्वादग्नेः । उच्यते । सायंप्रातः समिदाधाने पर्युक्षणपरिसमूहने यथा स्यातामिति परिसमूहनवचनम् । अत्र तु परिसमूहनाद्यकृत्वैव तस्मिन्नेवाग्नौ ब्रह्मचारी तूष्णीं समिधमादध्यात् । ब्रह्मचारिवचनमाचार्यनिवृत्त्यर्थं । यस्मात् यत् प्राजापत्यं तत् तूष्णीम् । ब्रह्मचारी च प्रजापत्यः इति श्रूयते । तस्मात् तूष्णीं समिधमादध्यात् ॥ (१०)

इति प्रथमे विंशतितमा कण्डिका

---

**मन्त्रेण हैके—अग्नये समिधमाहार्षं बृहते जातवेदसे तया त्वमग्ने वर्द्धस्व समिधा ब्रह्मणा वयं स्वाहा—इति ॥ १ ॥**

एके आचार्याः समिदाधानं मन्त्रेणेच्छन्ति । तत्र हकारोऽभिमतपक्षप्रदर्शनार्थः । पूर्वपक्षस्य श्रुतिसंयोगात् बलीयस्त्वं दृष्ट्वा इह हकारः प्रयुज्यते । तस्मात्तुल्यबलीयस्त्वं भवति[3] । तुल्ययोगे च विकल्प उपपद्यते । अग्नये समिधमाहार्षम्—इत्यनेन मन्त्रेण ॥

[1] A. परिवत्तः L. परिदवत्तः

[2] L. येषां.

[3] L. सिध्यति.

कथम् । ब्रह्मचारिणो यद्वासस्तेन पाणी संगृह्णीयादिति । संगृह्य सावित्रीमन्वाह पच्छः अर्धर्चशः सर्वामिति ॥

तस्य ब्रह्मचारिणः परिहितेन वाससा प्रावरणस्यानित्यत्वात् स्वस्य पाणिभ्यां च तस्य पाणी गृहीत्वा सावित्रीमन्वाह ॥ (५)

**यथाशक्ति वाचयीत ॥ ६ ॥**

यथाशक्ति वाचयीत पच्छस्तथार्धर्चशः तथा सर्वाः । एवं पच्छ इत्युच्यमाने तथा सर्वा वाचयति यथा शक्तिर्भवति ॥

अयं पादं पादमुक्त्वा तेन वाचयति । यदि ब्रह्मचारी पादं वक्तुं न शक्नोति ततस्तेन यथाशक्ति वाचयीत । एवमर्द्धर्चशः । एवं सर्वाम् ॥ (६)

**हृदयदेशेऽस्योर्ध्वाङ्गुलिं पाणिमुपदधाति मम—व्रते हृदयन्ते दधामि मम चित्तमनु चित्तं ते अस्तु । मम वाचमेकव्रतो जुंषस्व बृहस्पतिष्ट्वा नियुनक्तु मह्यम्—इति ॥ ७ ॥**

वाचयित्वा हृदयदेशेऽस्योर्ध्वाङ्गुलिं पाणिमुपदधाति । मम व्रते इत्यनेन मन्त्रेण । हृदयदेशे[1] हृदयदेशसमीपे उपदधाति स्थापयतीत्यर्थः ॥

ब्रह्मचारिणो हृदयदेशसमीपे स्वस्य पाणिमूर्ध्वाङ्गुलिं उपदधाति स्थापयति मन्त्रेण ॥ (७)

इति प्रथमे एकविंशतितमा कण्डिका

---

[1] L. omits this.

इत्थमादिशेदित्याह ।

**मेखलामाबध्य दण्डं प्रदाय ब्रह्मचर्यमादिशेत् ॥ १ ॥**

एतस्मिन् काले मेखलामाबध्नाति । दण्डं च प्रदाय ब्रह्मचर्यमादिशेत् । कथमादिशति ॥

ततो मेखलामाबध्य दण्डं प्रदाय ब्रह्मचर्यमादिशेत् ॥ (१)

**ब्रह्मचार्यस्यपोऽशान कर्म कुरु दिवा मा स्वाप्सीराचार्याधीनो वेदमधीष्वेति ॥ २ ॥**

ब्रह्मचार्यसि ब्रह्मचारी त्वमसि । अपोऽशानेति । अतः प्रभृत्याचमनं कुरु । इत्येतदुक्तं[1] भवति । कर्म कुरु यच्छास्त्रविहितम् । दिवा मा स्वाप्सीः । दिवाशयनप्रतिषेधः । आचार्याधीनो भव । वेदमधीष्व । सततं शयनपानभोजनादिषु अध्ययनेषु[2] च नित्यमाचार्याधीनेन भवितव्यमित्येतदुक्तं भवति ॥

इदानीं ब्रह्मचार्यसि । अपोऽशान मूत्रपुरीषादौ शास्त्रविहितमाचमनं कुर्वित्यर्थः । कर्म कुरु यच्छास्त्रविहितं कर्म सन्ध्योपासनादि । दिवा मा स्वाप्सीरिति दिवाशयनप्रतिषेधः । आचार्याधीनो नित्यं भव । वेदमधीष्व वेदाध्ययनं कुरु ॥ (२)

**द्वादश वर्षाणि वेदब्रह्मचर्यम् ॥ ३ ॥**

[1] A. वित्तं extra before इत्येतदुक्तं.

[2] L. अध्ययनादिषु.

द्वादश वर्षाणि वेदब्रह्मचर्यं[1] वेदस्य ब्रह्मचर्यं भवति[2]। अथ वेद-ग्रहणं किमर्थं क्रियते। कथं वेदव्रतस्यैवायं कालनियमः स्यादिति। तेन महानाम्निकादीनामूर्ध्वं द्वादशेभ्यः प्रयोगः। एवं च कृत्वा उपनयनात् प्रभृति षोडशे वर्षे गोदानं भवति। वेदग्रहणादयमर्थः[3] साध्यते। इतरथा हि वेदग्रहणमेव नाकरिष्यत्। एवमेके। अन्ये जन्मनः प्रभृति षोडशे वर्षे गोदानम्। द्वादशेष्वेव वर्षेष्वन्तर्भूतम्। तन्मध्यपातित्वात् माहाना-म्नीनां वा पृथग्भावः। कस्मात्। महानाम्नीनां वेदैकदेशत्वात्। तस्मात् सहैवैतैः[4] कालनियमोऽयम्। यदि वैतानि द्वादशसु[5] गण्यन्ते उत्तरेष्वस्य संख्या न प्राप्नोति। त्रिरात्रं द्वादशरात्रं संवत्सरं वेत्यस्य को दोषः। संवत्सरपक्षे गोदानं प्राप्नोति। एष दोषः उपनयनात् पूर्वमिच्छताम्। तेन नादरणीयोऽयं पक्षः[6]। ननु च वेदग्रहणमपार्थकम्। अन्यार्थं वेदग्रहणम्। एकस्य वेदस्य द्वादशवर्षाणि ब्रह्मचर्यम्। द्वयोश्चतुर्विंशतिः। त्रयाणां षड्विंशतिः। चतुर्णामष्टाचत्वारिंशत्। इत्येवमर्थं साधयितुकामेनाचार्येण वेदग्रहणं कृतम्॥

वेदस्य ब्रह्मचर्यं वेदब्रह्मचर्यं। वेदग्रहणं कथं वेदमात्रस्यायं कालनियमः स्यादिति। मन्त्रब्राह्मणयोर्वेदनामधेयम्। तेन महानाम्न्यादीनां व्रतानामूर्ध्वं द्वादश-वर्षेभ्यस्त्रयः संवत्सराः स्युः। एवं च कृत्वोपनयनप्रभृति षोडशे वर्षे गोदानं सिद्धम्। वेदग्रहणादयमर्थो लब्धः। एवमेके। अन्ये तु जन्मप्रभृति षोडशे वर्षे

[1] A. L. have भवति extra after this word.

[2] A. has वेदस्य extra after this word.

[3] A. L. वेदग्रहणादयः

[4] A. L. सहै वतेर्वातेः

[5] A. दाहः सुकरं for द्वादशसु। L. पनि extra after द्वादशसु, perhaps for परि.

[6] A. L. उपचयात्र प्रतीच्छत्वेनादरणीयं पक्षः

गोदानं। महानाम्नयादीनां च व्रतानां द्वादशवर्षेष्वन्तर्भावमिच्छन्ति महानाम्नयादीनामपि वेदैकदेशत्वादिति। पूर्वस्मिन् पक्षे यदा संवत्सरं व्रतचर्या तदा सप्तदशे गोदानं स्यात्। तस्मादयमेव पक्षः श्रेयान्। वेदग्रहणं कथमेकैकस्य वेदस्य द्वादशवर्षाणि ब्रह्मचर्यं स्यादिति। तेन द्वयोश्चतुर्विंशतिः। त्रयाणां षट्त्रिंशत्। चतुर्णामष्टाचत्वारिंशत्॥ (३)

ग्रहणान्तं वा॥ ४॥

ग्रहणान्तं वा ब्रह्मचर्यं भवति प्रागूर्ध्वं च द्वादशेभ्यः। एवं कुर्वताचार्येण त्रिविधं स्नानं दर्शितं भवति—विद्यास्नानं व्रतस्नानं विद्याव्रतस्नानमिति। यो द्वादशवर्षाणि ब्रह्मचर्यं कृत्वा अधीतविद्यः स्नानं करोति असौ विद्याव्रतस्नातकः। यः[1] प्राक् द्वादशवर्षेभ्यः विद्यामधीत्य स्नानं करोति असौ विद्यास्नातकः। यः पुनर्द्वादशवर्षाणि ब्रह्मचर्यं कृत्वा अनधीतविद्यः स[2] व्रतस्नातकः। स तु कांचिद्विद्यामुत्सृज्य स्नानं करोति। ग्राम्या आरण्या[3] इत्युभयलक्षणा च विद्या भवति। तत्र च महानाम्नीनां[4] नित्यानामध्ययनम्। तस्मात्[5] कारणात्तथैव वक्ष्यामः। यां[6] पुनरारण्यां ब्रवते[7] योऽनधीत्य[8] एतां विद्यां अधीयमानोऽपि वर्ह्णी विद्यां[9] स्नानं[10]

[1] L. यश्च.
[2] L. omits स.
[3] A. L. ग्राम्यारण्यां.
[4] L. महानाम्न्यादीनां.
[5] A. L. कस्मात्.
[6] A. L. ये.
[7] A. L. कुर्वते.
[8] A. L. योऽधीत.
[9] A. L. अनधीयानोऽपि विहाय विद्या.
[10] A. L. omit स्नानं and have यः instead.

करोति सः[1] स्नातको न[2] भवतीति। तस्मात्[3] अवश्यमध्ययनं महानाम्नीनाम्। ग्राम्यां तूत्स्रष्टुं[4] विद्यां शक्यम्॥

वेदग्रहणान्तं वा ब्रह्मचर्यं भवति प्रागूर्ध्वं वा द्वादशभ्यः। एवं ब्रुवता त्रिविधं स्नानं प्रदर्शितं भवति। विद्यास्नानं व्रतस्नानं विद्याव्रतस्नानमिति। प्राग्द्वादशभ्यो वेदमधीत्य यः स्नाति स विद्यास्नातकः। यस्तु द्वादशवर्षाणि ब्रह्मचर्यं कृत्वा अनधीतवेदः स्नाति स व्रतस्नातकः। यस्तु पुनर्द्वादशवर्षाणि ब्रह्मचर्यं कृत्वा अधीतवेदः स्नाति स विद्याव्रतस्नातकः। ननु विद्यान्ते गुरुमर्थेन निमन्त्र्य कृतानुज्ञातस्य वा स्नानमिति वक्ष्यति। अतः कथं व्रतस्नानस्य सम्भवः। उच्यते। विद्यान्ते इति न विद्यासमाप्तौ स्नानं चोद्यते। किं तर्हि। विद्याया अन्ते न मध्ये। तेन व्रतस्नातकोऽपि मध्यमुत्सृज्य अन्तमारण्यकमधीत्य स्नायात्। रहस्ये चारण्यकं प्राधान्येन स्नाननिमित्तं चोद्यते। नेदमनधीयन्स्नातको भवति इत्यादिना। ततः स्विष्टकृदादि समापयेत्॥ (४)

## सायं प्रातर्भिक्षेत ॥ ५ ॥

सायं च प्रातश्च भिक्षां याचेत। आचार्यार्थमात्मनश्चाशनार्थम्। यदा तत्कारणं नास्ति तदा भिक्षा न गृहीतव्या॥

अहनि रात्रौ चाचार्यार्थमशनार्थं चान्नं याचेत। तत्र भवत्पूर्वमित्यादि शास्त्रान्तरदृष्टो विधिर्द्रष्टव्यः॥ (५)

## सायं प्रातः समिधमादध्यात् ॥ ६ ॥

[1] A. L. omit सः

[2] A. L. omit न.

[3] A. L. यस्मात्.

[4] A. यामकुच्येति। L. यमनूच्येति.

समिदाधानं च सायं प्रातः च[1] करोति। तत्र समिदाधानधर्मा अग्निपरिसमूहनादारभ्योपस्थानान्ताः उक्ताः। तत्र च दर्शितं[2] यथा समिदाधाने भवन्तीति। इह पुनः सायंप्रातर्ग्रहणं न[3] कर्तव्यम्। कस्मात्। प्रकृतत्वात्। तत्[4] क्रियते पूर्वेण सह असंबन्धार्थम्[5]। संबन्धे सति को दोषः। क्रमनियमः प्राप्नोति। तेन क्रमनियमनिवृत्त्यर्थं पुनः सायंप्रातर्ग्रहणम्॥

अग्निं परिसमूह्येत्याद्युपस्थानान्ता धर्मा भवन्तीत्युक्तम्। पुनः सायंप्रातर्ग्रहणं पूर्वेणासम्बन्धार्थम्। तेन भैक्षं वा पूर्वं भवति समिदाधानं वेति क्रमानियमः सिद्धः॥ (६)

**अप्रत्याख्यायिनमग्रे भिक्षेत अप्रत्याख्यायिनीं वा॥ ७॥**

यो हि न प्रत्याचष्टे ईदृग्लक्षणं प्रथमं भिक्षेत। अप्रत्याख्यानशीलः[6] अप्रत्याख्यायी। तं याचेत्। अग्रे प्रथममित्यर्थः। पश्चादन्यान्। तत्र संशयः। किमेतद्भिक्षान्तरं आहोस्विद्याचनोपाय[7] इति। किंचातः। यदि तावद्याचनोपायः[8] अप्रत्याख्यायिनं[9] याचित्वा पश्चादन्येषां[10] नियमः।

[1] A. L. omit च.
[2] A. तत्र दावति.
[3] L. omits न.
[4] A. omits तत्.
[5] A. L. संबन्धार्थम्.
[6] A. L. अप्रत्या.
[7] A. L. आहोस्विच्छास्त्रोपाय.
[8] A. L. तावच्छास्त्रोपायः
[9] A. अप्रत्याख्यायिनीं. L. अप्रत्यख्यायिनां.
[10] A. पश्चादनोंम, L. पश्चात् (omit अन्येषां).

तस्मादन्यत्रापि[1] याचते । अप्रत्याख्यायिनीं वा स्त्रियं याचेत । तत्र सायं-प्रातः भिक्षेत । तस्यायं विधिः । नेत्युच्यते । भिक्षान्तरमेव गम्यते ॥

अयं नियमोऽनुप्रवचनीयभैक्षे । कुतः अनुप्रवचनीयं भवान् ददात्विति भैक्षमन्त्रात् ॥ (७)

**भवान् भिक्षां ददत्विति अनुप्रवचनीयमिति वा ॥ ८ ॥**

भिक्षां भवान् ददातु इत्येवं भिक्षां याचेत । अनुप्रवचनीयोपदेशात् गम्यते अनुप्रवचनीयार्थमिदं भिक्षायाचनमिति । भवत्पूर्वमित्येवम् । इदं तु भिक्षायाचनं सर्वेषां वर्णानां भवत्यविशेषात् । यदा तु स्त्रियं याचेत तदा भिक्षां भवती ददातु इत्यनुप्रवचनीयं वेति ॥

स्त्रीभिक्षा चेदुभयत्र मन्त्रे भवती ददात्विति ब्रूयात् ॥ (८)

**तदाचार्याय वेदयीत तिष्ठेदहःशेषम् ॥ ९ ॥**

तदनुप्रवचनीयार्थं[2] भिक्षामाहृतां आचार्याय वेदयीत । तद्वेदयित्वा[3] तिष्ठेदहःशेषम् । शिष्टं यदहस्तावल्लक्षणं स्थानं चोद्यते । आसनं न भवति ॥

तल्लब्धमाचार्याय निवेद्य तस्मिन्नहनि यावच्छिष्टं तावन्तं कालं तिष्ठेत् । आसनादि न कुर्यात् ॥ (९)

**अस्तमिते ब्रह्मौदनमनुप्रवचनीयं श्रपयित्वाचार्याय वेदयीत ॥ १० ॥**

[1] A. तस्मादन्यापि.

[2] L. omits तत् in the beginning.

[3] L. omits त in the beginning.

अस्तमिते ब्रह्मौदनं श्रापयति । ब्रह्मणः ओदनः ब्रह्मौदनः । तं श्रपयति ब्रह्मचारी पाकयज्ञविधानेन । अथवा ब्राह्मणानामर्थायायं[1] ओदनं उच्यते । अनुप्रवचनीयमिति वास्य[2] संज्ञा भवति । तं शृतमाचार्याय वेदयीत ब्रह्मचारी ॥

ब्रह्मस्य ओदनो ब्रह्मौदनः । ब्रह्मशब्दो ब्राह्मणवाचकः । तेन ब्राह्मणभोजनं विधास्यमानमत एव चरोर्भवति । अनुप्रवचननिमित्तमनुप्रवचनीयम् । पाकयज्ञविधानेन ब्रह्मचारी अनुप्रवचनीयं श्रपयित्वाचार्याय वेदयीत शृतः स्थालीपाक इति ॥ (१०)

**आचार्यः समन्वारब्धे जुहुयात् सदसस्पतिमद्भुतम्—इति ॥ ११ ॥**

पश्चादाचार्यः समन्वारब्धे ब्रह्मचारिणि—सदसस्पतिमद्भुतम्—इत्यनेन मन्त्रेण प्रथमामाहुतिं जुहोति ॥

ततः समन्वारब्धे प्रह्मचारिणि इध्माधानाद्याघारान्तं कृत्वा अनया जुहुयात् ॥ (११)

**सावित्र्या द्वितीयम् ॥ १२ ॥**

सावित्री प्रथमा ऋक् । तया द्वितीयां जुहोति । द्वितीयग्रहणमपार्थकम्[3] । उपदेशादेव द्वितीया भवति । द्वितीयेत्युच्यते अधिकारार्थम् । अधिकारे सति किं प्रयोजनम् ॥

[1] A. ब्रह्मणासामर्थ्या. L. ब्राह्मणसामर्थ्यात्.

[2] A. वाहन्य. L. वादन्य.

[3] A. L. have तेन extra before द्वितीयग्रहणं.

सावित्री तत्सवितुर्वरेण्यम्—इत्येषा प्रसिद्धा । द्वितीयग्रहणमुत्तरार्थम् ॥(१२)

## यद्यत् किञ्चात उर्ध्वमनूक्तं स्यात् ॥ १३ ॥

यदि नोच्यते यद्यत्किंचात ऊर्ध्वमिति तृतीया प्रसज्येत । अतोऽधिकारः क्रियते । कथम् । अनूक्तेन सावित्र्या च एका आहुतिः स्यादिति । यद्यत् किंचात ऊर्ध्वमित्युक्तं भवति । तत्रानेकधा प्रतिपन्नाः । केचित्तावत्प्रतिमण्डलं होममिच्छन्ति । अन्ये[1] प्रत्यनुवाकम् । अन्ये प्रतिसूक्तम् । प्रत्यृचमपरे । सर्वथा चोपपद्यते । यः शक्यते स कर्तव्यः । अस्य तु वाक्यस्य नैवायमर्थः । किं कारणम् । अनुशब्देनोदितत्वात् । यत्रानुशब्दो भवति तत्रानुप्रवचतीयं प्राप्नोति । यथा महानाम्नी सुकृतमिति व्रतानुप्रवचने प्राप्नोति । उपनिषदि च तत्र प्रत्यृचमिच्छन्ति ॥

अत्र सावित्री अनूक्तेति कृत्वा सावित्र्या द्वितीयं जुहोति । अत ऊर्ध्वमपि महानाम्न्यादिव्रतेषु यद्यदनूक्तं तेन तेन द्वितीयं जुहोति । एतदुक्तं भवति । महानाम्न्यादिव्रतेषु श्रवणान्ते अनुप्रवचनीयहोमः कार्यः । तत्र सावित्र्याः स्थाने—महानाम्नीभ्यः स्वाहा । महाव्रताय स्वाहा । उपनिषदे स्वाहा—इत्येवं द्वितीयं जुहोति । अन्यत् समानमिति । द्वितीयग्रहणं महानाम्न्यादिनामधेयेन होमार्थम् । इतरथा मन्त्रेण होमे क्रियमाणे प्रतिमन्त्रं स्वाहाकारः स्यात् । स च प्रदानार्थ इति कृत्वा अनेका आहुतयः स्युः । ततश्चोत्तरासां द्वितीयत्वं न स्यात् । तस्मात् द्वितीयग्रहणम् ॥ (१३)

## ऋषिभ्यस्तृतीयम् ॥ १४ ॥

तत्र संशयः किमयं मन्त्रः उत उपदेश इति । येषां मन्त्रः तेषां ऋषिभ्यः स्वाहा इति प्राप्नोति । येषामुपदेशः तेषां यावन्त ऋषय

[1] A. has न्येतृच extra before अन्ये.

उक्ताः तेषां प्रत्यृषि होमः प्राप्नोति। तत्रायं मन्त्र इत्युच्यते। कथं पुनर्ज्ञायते[1]। तृतीयग्रहणात्। नेत्युच्यते। तृतीयग्रहणस्येदं प्रयोजनम्। द्वितीयग्रहणेऽनुवर्तमाने अयमपि[2] द्वितीय एव स्यात्। तस्मात्तृतीयग्रहणं कर्तव्यम्। अथ ऋषिभ्यस्तृतीयमिति संख्यावचनं किमर्थम्। तत्राप्यापातत अन्या ऋषयः। तत्रानेकषष्ट्या ऋययोच्चदासवानुच्यते (?)। तृतीयां आहुतिमिच्छन्ति। तत्प्रयोजनम्। एवमेकेऽनुप्रवचनमिच्छन्ति। बहुधा चात्र विप्रतिपत्तिः। आगमस्त्वयं चानुपवचनीयो महानाम्नीषु महाव्रते उपनिषदि च इति। नान्यत्रेति। एवं ब्रुवतामृषिभ्य इति मन्त्रोऽयमिति ज्ञापितं भवति॥

तृतीयवचनमृषिभ्य इत्यस्य विधायकत्वं निवर्त्य मन्त्रत्वज्ञापनार्थम्। तेन ऋषिभ्यः स्वाहेति जुहोति॥ (१४)

## सौविष्टकृतं चतुर्थम्॥ १५॥

अथ संख्याविधानानि किमर्थानि। नियमार्थानि। नियमे सति आज्यभागो निवर्तते॥

सङ्ख्यावचनं नियमार्थम्। चतुर्थमेव न षष्ठमिति। तेनात्राज्यभागौ न भवतः॥ (१५)

## ब्राह्मणान् भोजयित्वा वेदसमाप्तिं वाचयीत॥ १६॥

तत एव ब्रह्मचारिणश्चरोः ब्राह्मणान् भोजयति। कस्मात्। अधिकृतत्वात्। तस्य च ब्राह्मणार्थत्वात्॥

[1] The commentary on the Sūtra up to this is missing in A. and L. It is restored from Trivandram MS. Perhaps a portion at the end of the last Sūtra is also lost.

[2] A. L. प्रथम for अयमपि.

संस्थाजपान्तं कृत्वा ब्राह्मणान् भोजयित्वा वेदसमाप्तिं भवन्तो ब्रुवन्त्विवति ब्रूयात् । ते च वेदसमाप्तिरस्त्विवति ब्रूयुः ॥ (१६)

**अत ऊर्ध्वमक्षारलवणाशी ब्रह्मचार्यधःशायी त्रिरात्रं द्वादशरात्रं संवत्सरं वा ॥ १७ ॥**

अत ऊर्ध्वमेते नियमा भवन्ति[1] । अक्षारलवणाशित्वम् । ब्रह्मचारिग्रहणमाचार्यनिवृत्त्यर्थम् । कियन्तं कालमिति । त्रिरात्रं द्वादशरात्रं संवत्सरं वेति । अत ऊर्ध्वमिति कस्मात् । संबन्धकरणार्थम् । संबन्धे किं प्रयोजनम् । कथमेतानि व्रतानि अत ऊर्ध्वमेव स्युः न प्रागिति सिद्धं भवति । प्राक्[2] भोजने अक्षारलवणाशित्वं न प्रसज्येत । भुक्तवन्तं अभुक्तवन्तं वा[3] कुमारमुपनयन्तीत्यनियमः[4] सिद्धो भवति ॥

अत ऊर्ध्वमिति कस्मात् । पूर्वेण सम्बन्धकरणार्थम् । प्रयोजनमुपरिष्टाद्वक्ष्यामः । ब्रह्मचारिवचनमाचार्यनिवृत्त्यर्थम् ॥ (१७)

**चरितव्रताय मेधाजननं करोति ॥ १८ ॥**

योऽयं नियम उक्तः तस्यान्ते मेधाजननं नाम[5] कर्म करोति[6] । चरितव्रतायेति न वक्तव्यम् । तदपि सम्बन्धार्थमेव । संबन्धे सति किं प्रयो-

[1] A. L. अत ऊर्ध्वमिति नियमार्थं भवति.

[2] A. L. यत् for प्राक्.

[3] A. L. omit अभुक्तवन्तं वा.

[4] A. कुमारमुपनयन्तीत्यर्थं नियमः L. कुमारमुपनयन्तीत्यत्र नियमः

[5] A. L. omit नाम.

[6] A. L. तत्करोति.

जनम्। यत्र मेधाजननं तत्र कथं ब्रह्मचर्यं स्यादिति। यत्र ब्रह्मचर्यं तत्रानुप्रवचनीयम्। एतत्प्रयोजनम्। क पुनः मेधाजननं नामास्ति। उत्तरत्र वक्ष्यति—कृताकृतमिति। तत्र व्रतस्यास्य कृताकृतत्वं भवति॥

चरितव्रतायेति वचनं मेधाजनेन व्रतस्य सम्बन्धार्थम्। यत्रोपनयने मेधाजननमस्ति तत्रैव व्रतचर्या। यत्र व्रतचर्या तत्रैवानुप्रवचनीयम्। उपनीतपूर्वस्य मेधाजननाभावे त्रितयमपि निवर्तते॥ (१८)

अनिन्दितायां दिश्येकमूलं पलाशं कुशस्तम्बं वा पलाशापचारे प्रदक्षिणमुदकुम्भेन त्रिः परिषिञ्चन्तं वाचयति—सुश्रवः सुश्रवा असि यथा त्वं सुश्रवः सुश्रवा अस्येवं मां सुश्रवः सुश्रवसं कुरु। यथा त्वं देवानां यज्ञस्य निधिपोऽस्येवमहं मनुष्याणां वेदस्य निधिपो भूयासम्—इति॥ १९॥

तत्र तिस्रो दिशः निन्दिताः दक्षिणा प्राग्दक्षिणा प्रत्यग्दक्षिणेति। अन्याः सर्वा अनिन्दिताः। एकमूलं पलाशं त्रिशाखमित्यर्थः। परिषिञ्चति। कुशस्तम्बं वा पलाशापचारे। पलाशाभावे कुशस्तम्बं वा परिषिञ्चति। अथ पुनः पलाशग्रहणं कुर्वन्नेतत् ज्ञापयति। अनेकमूलस्याप्यभावे कुशस्तम्बं परिषिञ्चेत। ब्रह्मचारी परिषिञ्चति। तं परिषिञ्चन्तं आचार्यस्त्रिरेव वाचयति। सुश्रव इत्येतं मन्त्रम्[1]। एतावदुपनयनम्॥

इदं मेधाजननं। तिस्रो निन्दिता दिशः। दक्षिणा प्राग्दक्षिणा प्रत्यग्दक्षिणेति। अन्याः सर्वा अनिन्दिताः। तस्यां दिश्येकमूलं पलाशं कुशस्तम्बं वा पलाशाभावे। प्रदक्षिणमुदकुम्भेन त्रिः परिषिञ्चन्तं ब्रह्मचारिणं

[1] A. L. have only इत्यन्तं for इत्येतं मन्त्रम्.

वाचयति सुश्रवः इति मन्त्रम् । एकमूलमशाखमित्यर्थः । पुनः पलाशग्रहणमनेकमूलस्याप्यभावे कुशस्तम्बं परिषिञ्चेदिति ॥ (१९)

**एतेन वापनादिपरिदानान्तं व्रतादेशनं व्याख्यातम् ॥ २० ॥**

वापनादिपरिदानान्तं यत्कर्म तद्व्रतादेशनं कर्तव्यमित्यर्थः । वापनादिग्रहणमलंकारनिवृत्त्यर्थम् । काय त्वा परिददामीति परिदानम्[1] । परिदानग्रहणं उत्तरकर्मनिवृत्त्यर्थम्[2] ॥

व्रतादेशनं यदस्माभिर्व्याख्यातं संवत्सरावमं चारयित्वा व्रतमनुयुज्य इति संवत्सरमादिशेत् इति च । तत्राप्येतेन प्रकारेण वापनादि परिदानान्तं कार्यमित्यर्थः । वापनादिग्रहणमलङ्कारनिवृत्त्यर्थं । काय त्वा परिददामि इत्येतत्परिदानम् । परिदानान्तवचनमुपरितनतन्त्रनिवृत्त्यर्थम् ॥ (२०)

**इत्यनुपेतपूर्वस्य ॥ २१ ॥**

उपनयनविधानं अनुपेतपूर्वस्य भवति । उत्तरविवक्षयेदमारभ्यते । उपेतपूर्वस्य विशेषं वक्ष्यति ॥

एतदुपनयनविधानमनुपेतपूर्वस्य । उत्तरविवक्षयेदमारभ्यते ॥ (२१)

**अथोपेतपूर्वस्य ॥ २२ ॥**

यं विशेषं वक्ष्यामः स उपेतपूर्वस्य भवति ॥

अनन्तरमुपेतपूर्वस्य विशेषं वक्ष्यामः ॥ (२२)

[1] A. L. परिदानानन्तरम्.

[2] A. L. इत उत्तरं for परिदानग्रहणं उत्तर.

**कृताकृतं केशवपनं मेधाजननं च ॥ २३ ॥**

कृताकृतं केशवपनं[1] भवति । मेधाजननं च कृताकृतं भवति ॥

कृताकृतमिति वर्तते ॥ (२३)

**अनिरुक्तं परिदानम् ॥ २४ ॥**

अनिरुक्तं परिदानमुच्यते[2] ॥

परिदानमनिरुक्तमिति न भवतीत्यर्थः ॥ (२४)

**कालश्च ॥ २५ ॥**

कालश्चानियतः ॥

उदगयनादिरनिरुक्तः ॥ (२५)

**तत्सवितुर्वृणीमहे—इति सावित्रीम् ॥ २६ ॥**

पूर्वस्याः सावित्र्याः स्थाने एतां सावित्रीं प्रयुञ्जीत । प्रायश्चित्तत्वेन पुनरुपनयनप्राप्तौ एवं कुर्यात् ॥ (२६)

इति प्रथमे द्वाविंशतितमा कण्डिका

---

[1] A. has only वपनं L. omits केशवपनं.
[2] A. L. परिदानोच्यते.

**ऋत्विजो वृणीतेऽन्यूनानतिरिक्ताङ्गान् ये मातृतः पितृतश्चेति यथोक्तं पुरस्तात् ॥ १ ॥**

ऋत्विजो वृणीते संभजन्ते[1] । कर्मार्थं परिग्रहं करोति । एतदुक्तं भवति । अन्यूनान् वृणीते अनतिरिक्तांश्च । किं षोडशभ्यः[2] अन्यूनान् अनतिरिक्तांश्च[3] । नेत्युच्यते । प्रमाणतः परिमाणतश्च[4] । तत्र प्रमाणतो नातिदीर्घाः नातिह्रस्वाः । परिमाणतश्च पञ्चाङ्गुलय इति[5] । षडङ्गुलयस्त्रिरङ्गुलयो वा न भवन्ति । एवं शास्त्रोक्तात् प्रमाणात् परिमाणाच्चान्यूनांश्चानतिरिक्तांश्च भवन्ति । ये मातृतः पितृतश्चेति व्याख्यातं पुरस्तात् । यादृशैः ऋत्विग्भिर्भवितव्यम् ॥

प्रमाणतः परिमाणतश्चान्यूनाङ्गाननतिरिक्ताङ्गांश्च ऋत्विजः सम्भजन्ते । ये मातृतः पितृतश्चेत्युक्तलक्षणयुक्ताश्च ते भवेयुः । तत्र प्रमाणतो नातिदीर्घा नातिह्रस्वाः । परिमाणतश्चतुरङ्गुलयः षडङ्गुलयो वा न भवन्ति ॥ (१)

**यून ऋत्विजो वृणीत इत्येके ॥ २ ॥**

एके आचार्या युवानो वरयितव्या इति मन्यन्ते । पञ्चधा वयः कल्पन्ते । बालो युवा मध्यो वृद्धः स्थविर इति । तत्र ये युवानस्तेषां वरणमिच्छन्ति । अन्ये पुनः कर्मकरणसमर्थानां वरणमिच्छन्ति । अथ ऋत्विगधिकारे वर्तमाने ऋत्विग्ग्रहणं किमर्थम् । अनृत्विजां मा भूदिति ।

[1] A. L. वसन्ते.
[2] A. कि . . . शौत्य:
[3] L. omits the entire sentence from किं.
[4] A. L. omit परिमाणतः
[5] After इति there is a long break in A. up to कौषीतकि in Sūtra 5.

नैवानृत्विजां प्राप्नोति । उच्यते[1] । वरणसामान्यादनृत्विजामयं[2] गुणः प्रसज्येत । तन्निवृत्त्यर्थमृत्विग्ग्रहणम् । के[3] पुनस्ते । चमसाध्वर्यवः ॥

अन्ये कर्मसमर्थानित्याहुः । पुनर्ऋत्विग्ग्रहणं वरणसामान्यादनृत्विजामपि चमसाध्वर्युप्रभृतीनामेतद्गुणप्राप्तौ तन्निवृत्त्यर्थम् ॥ (२)

**ब्रह्माणमेव प्रथमं वृणीतेऽथ होतारमथाध्वर्युमथोद्गातारम् ॥ ३ ॥**

तत्र ब्रह्मणः प्रथमं वरणमुपदिश्यते । पश्चाद्धोतुरध्वर्युरुद्गातुरिति । ब्रह्माणमेवेत्येवकारः किमर्थः । अवधारणार्थः । किमर्थं अवधारयति[4] । ब्रह्मणः प्रथमं वरणं यथा स्यादिति । यद्येवं नार्थः एवकारेण । उपदेशादेव ब्रह्मणः प्रथमं सिद्धम् । एवं तर्हि नियमार्थ एवकारः । कथं ब्रह्मणः कुर्वन् होत्रादीनामनियतः क्रमो भवतीति ॥

एवकारो नियमार्थः । कथं ब्रह्मण एव प्रथमं वरणं स्यादिति । एवं नियमं कुर्वता होत्रादीनामनियतः क्रमो भवतीत्येतत् साधितम् ॥ (३)

**सर्वान् वा येऽहीनैकाहैर्याजयन्ति ॥ ४ ॥**

सर्वान् वा वृणीते येऽहीनैकाहैर्याजयन्ति । तत्राहीनैकाहग्रहणं न कर्तव्यम् । सर्वान् वेत्युच्यमाने शमित्रादीनामपि वरणं प्राप्नोति । ऋत्विगधिकारान्न भविष्यन्ति । येषां चत्वार[5] ऋत्विजस्तेषां भवत्येव प्रयोजनम् ।

[1] L. उग्र for उच्यते.

[2] L. वरणसामान्याद्दत्विजामयं.

[3] L. केन for के.

[4] L. omits अव.

[5] L. omits the word.

कथम् । सर्वान् वा कर्तॄन्[1] इत्यध्याहारः कर्तव्यो भवति । तस्मात्[2] ऋत्विक्शब्दस्याध्याहारो न शक्यते कर्तुम् । कस्मात् । वरणस्याम्नातत्त्वात् । सर्वेषां तेन कर्तॄणामिति[3] वा ध्याहारः[4] क्रियते । एवं सति शमित्रादीनामपि प्रसज्येत । तन्निवृत्त्यर्थं अहीनैकाहग्रहणं कर्तव्यम् । येषां पुनः ऋत्विक्शब्दोऽयं सर्वेषु वर्तते तेषामेवातिरिच्यते । तेषामपि तदेव प्रयोजनं सर्वेषु वर्तते—प्रतिप्रस्थातादिषु होत्रका उपह्वयध्वमिति । ननु च ऋत्विगधिकारात् भविष्यति । उच्यते । स्यात् । कस्मात् । अत्र ऋत्विग्वरणदर्शनात् । उच्यते । अभिधानान्न भविष्यति । सामान्यवरणेन प्रसङ्गः स्यात् । आपो मे होत्रेत्यत्र होत्रशब्दात् । उच्यते । होतृशब्दोऽयं अहोतृषु ऋत्विजेष्वपि वर्तते । एवं शमित्रादिष्वपि यथा स्यात् । न सामान्येन वरणं स्यात् । शमितृनिवृत्त्यर्थं वचनमिदमारभ्यते अहीनैकाहैर्याजयन्ति इति ॥

अहीनैकाहैर्याजयन्तीति वचनं शमितृनिवृत्त्यर्थम् । कथं वा प्राप्नुयात् । सामान्यवरणप्रसङ्गात् । आपो मे होत्राशंसिन इति होत्रकान् इत्यत्र होत्रकशब्दो मुख्यवर्जितेषु वर्त्तते । होत्रका उपह्वयध्वमितीतरान् इत्यत्र मुख्यवर्जितेषु होत्रकशब्दस्य दर्शनात् । ततश्च यथा प्रतिप्रस्थात्रादिषु वर्त्तते एवं शमित्रादिष्वपि वर्त्तते होत्रकशब्द इति ॥ (४)

**सदस्यं सप्तदशं कौषीतकिनः समामनन्ति । स कर्मणामुपद्रष्टा भवतीति । तदुक्तमृग्भ्याम्—यमृत्विजो बहुधा कल्पयन्ते—इति ॥५॥**

[1] L. कर्तृक.

[2] L. omits इत्यध्याहारः कर्तव्यो भवति । तस्मात्.

[3] L. कर्तॄनिति.

[4] L. वाक्याध्याहारः.

सदसि भवः सदस्यः । सप्तदशो भवतीति कौषीतकिन[1] आचार्या मन्यन्ते । किमसौ करोति । स कर्मणामुपद्रष्टा भवतीति । उपद्रष्टेति यागसहायत्वमसौ करोतीति । असावध्वर्युः । ऋग्भ्यामभिहितो भवति यमृत्विज[2] इति । तत्र सप्तदशग्रहणं न कर्तव्यम् । उपदेशादेवायं सप्तदशो भवति । एवं सिद्धे यत् सप्तदशग्रहणं[3] करोति तत् ज्ञापयति—अयमपि ऋत्विक्सधर्मा भवतीति । ऋत्विक्सधर्मत्वे किं[4] प्रयोजनम् । उपस्थानं प्रसर्पणमित्येवमादि सामान्यं[5] कर्म प्रसिद्धं भवति । अथवा सप्तदशग्रहणं नियमार्थम् । कथमेक एव सदस्यः स्यादिति । अन्येषां मते यः[6] सदस्यो दृष्टः तन्निदर्शनार्थं सप्तदशग्रहणम् । कौषीतकिनः[7] कल्पे समामनन्ति । न सूत्रतः । कथमेतद्गम्यते । मन्त्रलिङ्गोपदेशात् ॥

सदसि भवः सदस्यः । सप्तदशग्रहणमृत्विक्सधर्मा भवतीति ज्ञापनार्थम् । तेनोपस्थानप्रसर्पणादि सामान्यविहितं सिद्धम् । अथवा नियमार्थम् । कथमेक एव सदस्यः स्यादिति । शास्त्रान्तरेऽनेके सदस्या दृष्टाः । तन्निवृत्त्यर्थम् । स च कर्मणामुपद्रष्टा भवतीत्येवं कौषीतकिन आचार्या मन्यन्ते । ऋग्भ्यां चायमर्थ उक्तः ॥ (५)

## होतारमेव प्रथमं वृणीते ॥ ६ ॥

एवकारोऽवधारणार्थः । किमवधारयति । होतारमेव प्रथमं वृणीते न ब्रह्माणम् । एवं सति ब्रह्मण उपदेशोऽपार्थकः । उच्यते । नापार्थकः ।

[1] The break in A extends up to कौषीतकि.

[2] A. ऋग्भ्यामभिहितोयमृत्विज.

[3] A. L. omit from न कर्तव्यम् up to सप्तदशग्रहणम्.

[4] A. सधर्मत्वे किं L. सधर्मलोकम.

[5] A. L. समान.

[6] A. L. कः.

[7] The break in A extrends up to कौषीतकि.

विनिविष्टविषयावेतौ । यदा चतुर्णां वरणं तदा ब्रह्मण एव नान्यस्य । यदा सर्वेषां वरणं तदा होतुरेव नान्यस्येति । द्वयोरवधारितयोः होतृब्रह्मणोः[1] विकल्पमिच्छन्ति ॥

एवकारोऽवधारणार्थः । होतारमेव न ब्रह्माणमिति । एवं चेत् पूर्वेण विरोधः । न । यदा चतुर्णां वरणं तदा ब्रह्मणः प्रथमं वरणम् । यदा सर्वेषां तदा होतुः प्रथमं वरणमिति ॥ (६)

**अग्निर्मे होता स मे होता होतारं त्वामुं वृणे—इति होतारम् ॥ ७ ॥**

अग्निर्मे होतेत्यनेन मन्त्रेण वृणीते होतारम् । तत्र होतृग्रहणमपार्थकम् । कस्मात् । अधिकृतत्वात् । उच्यते । होतृग्रहणं प्रयोजनार्थं क्रियते । किं प्रयोजनम् । प्रथममेव वरणे होतुरयं[2] मन्त्रः । द्वितीयवरणे न स्यात् । इष्यते च । तदर्थं होतृग्रहणं क्रियते ॥

अनेन होतारं वृणीते । अमुमित्यस्य स्थाने होतुर्नाम वाच्यम् । पुनर्होतृग्रहणं होतृवरणे आम्नातो मन्त्र उत्तरत्रानुवर्त्तते इति ज्ञापनार्थम् ॥ (७)

**चन्द्रमा मे ब्रह्मा स मे ब्रह्मा ब्रह्माणं त्वामुं वृणे—इति ब्रह्माणम् ॥ ८ ॥**

अयं ब्रह्मणो वरणे मन्त्रः । उत्तरेषां चानुप्रदर्शनार्थः[3] ॥

कृत्स्नपाठोऽनुवृत्तिमार्गप्रदर्शनार्थः ॥ (८)

[1] A. L. omit होतृ.

[2] A. वरणं प्रथमते. L. वरणं प्रथमेते.

[3] A. has कृष्णो ध्यन्तय extra after this. L. omits उत्तरेषां चानुप्रदर्शनार्थः.

**आदित्यो मेऽध्वर्युः—इत्यध्वर्युम्। पर्जन्यो म उद्गाता—इत्युद्गातारम्। आपो मे होत्राशंसिन्यः—इति होत्रकान्। रश्मयो मे चमसाध्वर्यवः—इति चमसाध्वर्यून्। आकाशो मे सदस्यः—इति सदस्यम्। स वृतो जपेत्—महन्मेऽवोचो भर्गो मेऽवोचो भगो मेऽवोचो यशो मेऽवोचः स्तोमं मेऽवोचः क्लृप्तिं मेऽवोचस्तृप्तिं मेऽवोचो भुक्तिं मेऽवोचः सर्वं मेऽवोचः—इति ॥ ९ ॥**

आदित्यो मेऽध्वर्युरित्यध्वर्युं वृणुयात्। पूर्ववदनुवृत्तिर्मन्त्रस्य। पर्जन्यो मे उद्गातेत्युद्गातारं वृणोति। आपो मे होत्राशंसिन्य इति होत्रकान्। तत्र होत्रका[1] उपह्वयध्वमित्येतत्। रश्मयो मे चमसाध्वर्यव इति चमसाध्वर्यून् वृणोति। आकाशो मे सदस्य इति सदस्यं वृणोति। स वृतो जेपत्—महन्मेऽवोचः इत्येतं मन्त्रम्। स इत्येतदतिरिच्यते। तद्वक्ष्यते। अन्यतरस्य मा भूदिति। वरणग्रहणाद्भविष्यति सर्वेषाम्। एवं तर्हि सग्रहणं क्रियते कथं वरणादनन्तर एवायं जपः स्यादिति। इतरथा हि सर्वेषां यदा[2] वरणं कृतं स्यात्तदा ग्रहणं स्यात्। तथा मा भूदिति। तेन सग्रहणमनन्तरार्थं क्रियते॥

सग्रहणं कथम्। वरणानन्तरमेव जपः स्यात् सर्वेषां वरणे कृते माभूदिति। वृतग्रहणं ये ये वृतास्ते ते जपेयुरित्येवमर्थम्॥ (९)

**जपित्वा—अग्निष्टे होता स ते हाता होताहं ते मानुषः—इति होता प्रतिजानीते ॥ १० ॥**

जपित्वा अग्निष्टे होतेत्यनेन मन्त्रेण होता प्रतिजानीते। अथ जपित्वेति जपग्रहणं भूयः कथं क्रियते। कथमन्यमपि जपित्वा प्रतिजानीया-

[1] A. has के extra before this.

[2] A. L. omit यदा.

दिति । कः पुनरसौ जपः । तन्मामवतु तन्मा विशतु इत्ययम् । उच्यते । यद्येवं कस्मादसौ जप इहैव न पठ्यते । अनित्यत्वादिह नोपदिश्यते । कथं पुनरसावनित्य इति । तदुत्तरत्रैव वक्ष्यामः ॥

जपित्वेति वचनं तन्मामवतु तन्मा विशतु इत्येतमपि जपं जपित्वेत्येवमर्थम्। इहैव तर्हि कस्मान्न पठितः । अनित्यत्वात् । अनित्यत्वन्तु वक्ष्यामः ॥ (१०)

**चन्द्रमास्ते ब्रह्मा स ते ब्रह्मा ॥ ११ ॥**

इति ब्रह्मा प्रतिजानीते[1] ॥

तेशब्दपाठः प्रतिवचनस्यानुवृत्तिमार्गप्रदर्शनार्थः ॥ (११)

**एवमितरे यथादेशम् । तन्मामवतु तन्मा विशतु तेन भुक्षिषीय— इति च याजयिष्यन ॥ १२ ॥**

इतरे अध्वर्य्वादयः यथादेशं प्रतिजानते[2] । तन्मामवतु तन्मा विशतु इत्येतं मन्त्रं याजयिष्यन् जपति । अस्ति पुनः कश्चित् अयाजयिष्यन्[3] यो हि व्रियते । अस्तीति ब्रूमः । यदा अग्न्याधेये चतुर्णां वरणं भवति तदा अयाजयितारस्ते भवन्ति । ननु च तत्रापि वै याजयितारस्ते भवन्तीति । तदसंवरणम् । सर्वकर्मार्थं वरणमिति । यत्र सोमाङ्गं वरणं तत्रासौ याजयिष्यति । तेन तत्रायं जपो भवति । तेनायमनित्यः ।

[1] A. L. omit this passage.
[2] A. L. प्रतिजानीते.
[3] A. L. अयाजयिष्यन्त इति.

ईदृग्लक्षणैः ऋत्विग्भिः कर्तव्यम् । एतदुक्तं भवति । कथं कीदृग्लक्षणैर्याजयितव्यमित्युच्यते ॥

जपतीति शेषः । यदा अग्न्याधेये चतुर्णां वरणं भवति तदा याजयितारस्ते न भवन्ति। यत्तु सोमाङ्गं वरणं भवति तत्र याजयितारो भवन्ति। तेन सोमाङ्गवरणे एवायं जपो नाग्न्याधेये । तेनायमनित्यः ॥ (१२)

**न्यस्तमार्त्विज्यमकार्यम् ॥ १३ ॥**

न्यस्तं त्यक्तम् । यदा विवादेन आर्त्विज्यं त्यक्तं भवति तदा न कर्तव्यम् । अन्यस्य कृतं आर्त्विज्यं न कर्तव्यम् । एवं सति अहीनानामुपदेशोऽपार्थकः । तस्मात्पाठान्तरं वर्णयति ॥

ऋत्विग्भिर्विवादेन त्यक्तमार्त्विज्यमकार्यम् ॥ (१३)

**अहीनस्य नीचदक्षिणस्य ॥ १४ ॥**

नीचदक्षिणस्य अल्पदक्षिणस्येत्यर्थः । तस्य न कर्तव्यमिति वर्णयन्ति । एवं वर्णयत् अल्पदक्षिणा भवन्तीत्येतत्प्रदर्शितं भवति । श्रुतिदर्शनाच्च । तस्मादाहुर्दातव्यैव यज्ञे दक्षिणा भवत्यप्यल्पिकापीति । ये वा अहीना यथोक्तदक्षिणाः तत्र कर्तव्यं इति श्रुतिर्दर्शयति । न पापः पुरुषो याज्यो द्वादशाहेन—इत्युक्त्वा पश्चाद्ब्रूते[1]—तस्माद्यद्याज्यः प्रतिगृह्णन्तो वैते तमयाजयन् । तस्मात्प्रतिगृह्णता याज्यम्—इति । तदेतत् ज्ञापयति । यथोक्तदक्षिणे अहीनाः कर्तव्या इति ॥

[1] A. यत्वादते L. यज्ञाद्दते.

अल्पदक्षिणस्याहीनस्यार्त्विज्यमकार्यम् । ततो ज्ञायते एकाहस्याल्पदक्षिणस्यापि कार्यमिति । विज्ञायते च तस्मादाहुर्दातव्यैव यज्ञे दक्षिणा भवत्यप्यल्पिकापीति ॥ (१४)

व्याधितस्यातुरस्य ॥ १५ ॥

व्याधितस्यातुरस्य च न कर्तव्यमार्त्विज्यम् ॥

व्याधितो ज्वरादिगृहीतः । आतुरस्तल्पगतः ॥ (१५)

यक्ष्मगृहीतस्य ॥ १६ ॥

यक्ष्मगृहीतस्य च न कर्तव्यम् ॥

यक्ष्मगृहीतः क्षयव्याधिगृहीतः ॥ (१६)

अनुदेश्यभिशस्तस्य ॥ १७ ॥

यः सहदेशिना अभिशस्तस्तस्य च न कर्तव्यमार्त्विज्यमित्येके । अन्ये पुनरनुदेश्यभिशस्त इति श्राद्धे यः प्रतिषिद्धस्तस्य न कर्तव्यमिति[1] ॥

सदेशिनाभिशस्तस्यैवमेके । अन्ये तु श्राद्धे प्रतिषिद्धस्येत्याहुः ॥ (१७)

क्षिप्तयोनेरिति चैतेषां ॥ १८ ॥

क्षिप्तयोनिरिति यस्य माता एकस्मिन् भर्तरि नावतिष्ठते सः[2] । तस्य च न कर्तव्यम् । एतेषामन्येषां चैवं प्रकाराणाम् ॥

[1] A. omits from एके । अन्ये पुनः up to this.

[2] A. L. omit सः.

क्षिप्तयोनिर्नाम यस्य माता स्वभर्त्तरि नावतिष्ठते। अकार्यमिति सर्वत्र सम्बन्धनीयम्। इति चैतेषामिति वचनमन्येषामप्येवंप्रकाराणां न कार्यमित्येवमर्थम् ॥ (१८)

**सोमप्रवाकं परिपृच्छेत्—को यज्ञः क ऋत्विजः का दक्षिणा—इति ॥ १९ ॥**

सोमं यः प्रथमं निवेदयति असौ सोमप्रवाक इत्युच्यते। तं पृच्छेत्। किमिति। को यज्ञः के ऋत्विजः का दक्षिणा इति। एवं पृच्छेत् ॥

यः सोमं प्रथमं निवेदयति इदं त्वया अस्मिन् कार्यमिति स सोम प्रवाकः। तमेवं पृच्छेत् ॥ (१९)

**कल्याणैः सह सम्प्रयोगः ॥ २० ॥**

पृष्ट्वा कल्याणो यज्ञः कर्तव्यः। अप्रतिषिद्ध इत्यर्थः। तथा कल्याणैः ऋत्विग्भिः सह कर्म कर्तव्यम्। शास्त्रचोदितैरित्युक्तं भमति। तथा दक्षिणात्र कल्याणैः स्युरिति न तं ध्यानवृद्धाः। एतैः कल्याणैः तथा दक्षिणा अपि परिपृच्छेत् ॥

कल्याणे यज्ञे कार्यम्। कल्याणैर्ऋत्विग्भिः सह कार्यम्। दक्षिणा अपि कल्याण्यो यदि स्युः तथा सति कार्यं नान्यथा ॥ (२०

**न मांसमश्नीयुर्न स्त्रियमुपेयुरा क्रतोरपवर्गात् ॥ २१ ॥**

आ क्रतुपरिसमाप्तेः क्रत्वादौ प्रभृति आ[1] अपवर्गादेते नियमा भवन्ति। अथ वरणादौ कस्मान्न भवति। वरणादौ[2] कल्प्यमाने[3] दोषः।

[1] A. L. omit आ.
[2] A. L. have नियमादौ.
[3] L. कल्पने.

यदा मध्यमायामुपसदि वरणं भवति तदा प्रागनियमः प्राप्नोति । तस्मात् क्रत्वादौ नियमा अध्यवसीयन्ते ॥

क्रत्वादिप्रभृति आ अपवर्गात् एते नियमा भवन्ति । वरणप्रभृतीति कल्प्यमाने यदि मध्यमोपसदि वरणं भवति तदा प्रागनियमः प्रसज्येत । तस्मात् क्रत्वादिप्रभृतीति युक्तम् । मध्यमोपसदि च शास्त्रान्तरे वरणं दृष्टम् ॥ (२१)

**एतेनाग्ने ब्रह्मणा वावृधस्व—इति दक्षिणाग्नावाज्याहुतिं हुत्वा यथार्थं प्रव्रजेत् ॥ २२ ॥**

एतेनाग्ने इत्येतयर्चा दक्षिणाग्नावाज्याहुतिं हुत्वा यथार्थं प्रव्रजेत् । गच्छेदित्यर्थः । तेनादौ एषा आहुतिर्भवतीत्येवमेके । अन्ये पुनरन्ते एतामाहुतिमिच्छन्ति । कस्मात् । अन्तोपदेशात् शास्त्रान्तरोपदेशाच्च । मन्त्रलिङ्गदर्शनाच्च । एवं सति यथार्थं प्रव्रजेदित्यस्य कोऽर्थः । अनियमो भवतीत्यर्थः । आहुत्या ऊर्ध्वमिति ॥

क्रत्वन्ते स्वस्य दक्षिणाग्नौ एतेनाग्ने इत्येतया आज्याहुतिं जुहोति । नैमित्तिकत्वात् शास्त्रान्तरदर्शनाच्च मन्त्रलिङ्गाच्च । चकृमेति हि भूतप्रत्ययः । तेन क्रत्वन्ते इति सिद्धम् । यथार्थं प्रव्रजेदिति यथार्थमाचरेत् । अनियमो भवतीत्यर्थः । हुत्वा अनियमो भवतीति ब्रुवन् समाप्तेऽपि क्रतौ होमपर्यन्तं नियमा भवन्तीति ज्ञापयति । आज्याहुतिवचनं तन्त्रनिवृत्त्यर्थमिष्यते । न परिस्तरणविकल्पार्थम् ॥ (२२)

**एवमनाहिताग्निर्गृह्ये इमामग्ने शरणिं मीमृषो नः—इत्येतयर्चा ॥ २३ ॥**

अनाहिताग्निः गृह्ये आज्याहुतिं जुहोति—इमामग्ने इत्येतयर्चा । अथ कस्मादाम्नातमेतस्मिन्[1] प्रकरणे इति । मधुपर्कविवक्षया[2] कार्यः ।

[1] A. L. समाम्नातमेतास्मिन् for अथ कस्मादाम्नातमेतस्मिन्.
[2] A. मधुपर्केपि वेस्यराः L. मधुपर्के निवेष्टरः.

कस्यासौ[1] देय इति। येषां[2] ऋत्विजां वरणं समाम्नातम्। तेन प्रसङ्गेन इहाम्नातम्॥

एतयेति वचनमेतया जुहुयादेवेत्येवमर्थम्। तेनात्रापि तन्त्रं न भवति। ऋचेति वचनमकृतविवाहोऽप्यार्त्विज्यं कृतवानेतया लौकिकाग्नौ जुहुयादित्येवमर्थम्। मधुपर्कप्रसङ्गादत्र ऋत्विग्वरणमाम्नातम्॥ (२३)

इति प्रथमे त्रयोविंशतितमा कण्डिका

---

ऋत्विजो वृत्वा मधुपर्कमाहरेत्॥ १॥

आहरति इति दानकर्मा। दद्यात्। इत्येतदुक्तं भवति॥

दद्यादित्यर्थः॥ (१)

स्नातकायोपस्थिताय॥ २॥

स्नातकायोपस्थिताय गृहमभ्यागताय मधुपर्को देयः॥

उपस्थिताय कृतसमावर्तनाय तस्मिन्नहनि गृहानभ्यागताय विवाहार्थिने च॥ (२)

राज्ञे च॥ ३॥

1. A. तस्यादे. L. तस्यादौ.
2. A. त्वा. L. त्वां.

राज्ञे च गृहमभ्यागताय देयः ॥

उपस्थिताय ॥ (३)

आचार्यश्वशुरपितृव्यमातुलानाञ्च ॥ ४ ॥

एतेषां च मधुपर्को देयः । अथ पूर्वयोः पृथगुपदेशः कस्मात् क्रियते इति । समासेनैव पाठः कर्तव्यः यथा उत्तरेषाम् । उच्यते । अतुल्यत्वात्पृथगुपदेशः । कथमतुल्यत्वमिति । स्नातकाय तदहरेव । कथं गम्यते । उपस्थितवचनात् । यत्रैनं पूजयिष्यन्तो भवन्तीति वचनाच्च मधुपर्कोऽस्य दातव्य इत्येतद्वेदितं भवति । राज्ञे पुनरहरहरुपस्थिताय देयः । आचार्यादीनां प्रतिसंवत्सरोषितानां देय इति । कथं पुनरेतत् गम्यते यथा एते विशेषा भवन्तीति । स्नातकाय तावत् गम्यते यथा तस्मिन्नहनि आगताय[1] देय इति । तथाचार्यादीनां प्रतिसंवत्सरं च शास्त्रान्तरदर्शनात् । तत्राप्रतीतपदार्थत्वात् । मधुपर्को लोके स्वयमेव विदधाति ॥

आचार्यादीनां पूर्वयोरसमासेन निर्देशस्त्वतुल्यत्वज्ञापनार्थः । तेन स्नातकाय तदहरेव देयः । यत्रैनं पूजयिष्यन्तो भवन्तीति वचनात् विवाहार्थिने च । राज्ञे त्वहरहरभ्यागताय । आचार्यादीनां प्रतिवत्सरोषितागतानाम् । शास्त्रान्तरदर्शनाद्विशेषो लब्धः ॥ (४)

अप्रसिद्धत्वान्मधुपर्कस्वरूपमाह—

दधनि मध्वानीय ॥ ५ ॥

दध्नि मधु आनयति । तत्रासेचनककर्मा आनयतिः[2] । निषिञ्चतीत्येतदुक्तं भवति ॥

[1] A. L. विवाहे for आगताय.

[2] A. L. omit this.

आनयतिरत्रासेचनकर्मा । आसिच्येत्यर्थः ॥ (९)

सर्पिर्वा मध्वलाभे ॥ ६ ॥

सर्पिर्वा निषिञ्चति । मधु वेति सिद्धम् । मध्वलाभवचनं अपार्थकम् । अलाभवचनं क्रियते कथमलाभे वाचनिकः प्रतिनिधिः[1] स्यादिति । इतरथा हि सामान्यात् प्रतिनिधिरिति कृत्वा अन्यत् किंचित्[2] प्रतिनिधीयते । तन्निवृत्यर्थं वचनमिदमारभ्यते । तत्र मधुपर्कस्य दानं वक्तव्यम् । प्रतिग्रहश्च । तत्र दानं प्रथमं विधीयते । कस्मात् । अल्पत्वात्तस्य ॥

इदं वचनं मध्वलाभे अयमेव प्रतिनिधिर्भवति नान्यस्तैलादिरित्येवमर्थम् ॥ (६)

अल्पत्वाद्दातुः कर्म पूर्वमाह—

विष्टरः पाद्यमर्घ्यमाचमनीयं मधुपर्को गौरित्येतेषां त्रिस्त्रिरेकैकं वेदयन्ते ॥ ७ ॥

तत्र विष्टर इत्यासनमुच्यते । पाद्यमिति । पादार्थमुदकं पाद्यमिति । तथार्घार्थमुदकमर्घ्यम्[3] । आचमनार्थमुदकमाचमनीयमिति । मधुपर्क उक्तः प्राक् । गौरिति पशुद्रव्यं किंचिन्निर्दिश्यते । एतेषां विष्टरादीनां द्रव्याणां एकैकस्य[4] त्रिस्त्रिर्निवेदनं भवति । तत्र एतेषामिति न वक्तव्यम् । कस्मात् ।

[1] A. L. प्रतिषेधः.

[2] A. L. अपद्रुष्यं for अन्यत् किंचित्.

[3] A. L. have only तथार्घ्यमुदकमेव.

[4] A. has here the following before त्रिस्त्रिः Extra: द्वयोः प्रवृत्तिः । तेन क्षत्रियवैश्ययोः प्रवृत्तिरनियमश्च । किं पुनरत्र न्याय्यं स्यात् । उच्यते । क्रमो नियम्यते ।

अधिकृतत्वात् । उच्यते नियमार्थमिदमारभ्यते । इतरथा विष्टरादीनां निवेदनं स्यात्[1] । तत्र भोजनस्यापि निवेदनं प्राप्नोति । तन्निवृत्त्यर्थो नियम उच्यते । अस्ति भोजनमिति । अस्तीति ब्रूमः । उत्तरत्र वक्ष्यामः ॥

विष्टर इत्यासनम् । पाद्यार्थमर्घ्यार्थमाचमनार्थञ्चोदकं तथोक्तम् । एतेषामिति वचनं एतेषामेव त्रिर्निवेदनं यथा स्यात् भोजनस्य मा भूदिति । भोजनञ्च देयमिति वक्ष्यामः । ऋत्विजां मधुपर्कदाने द्वे गती सम्भवतः पदार्थानुसमयः काण्डानुसमय इति । तत्र पदार्थानुसमयो नाम सर्वेषां वरणक्रमेण विष्टरं दत्वा ततः पाद्यन्ततोऽर्घ्यमिति । काण्डानुसमयो नाम एकस्यैव विष्टरादिगोनिवेदनान्तं समाप्य ततोऽन्यस्य सर्वं ततोऽन्यस्येति ॥ (७)

अथ ग्रहीतुः कर्माह—

**अहं वर्ष्म सजातानां विद्युतामिव सूर्यः । इदन्तमधितिष्ठामि यो मा कश्चाभिदासति—इत्युदगग्रे विष्टर उपविशेत् । आक्रम्य वा ॥ ८ ॥**

अहं वर्ष्म सजातानां इत्यनेन मन्त्रेण उदगग्रे विष्टरे उपविशति । आक्रमणं वा पादाभ्यां करोति । तेनाक्रमणस्य च विकल्पः ॥

पद्भ्यामाक्रम्य वा विष्टरौ । एतयोर्विकल्पः ॥ (८)

**पादौ प्रक्षालयीत दक्षिणमग्रे ब्राह्मणाय प्रयच्छेत् ॥ ९ ॥**

पादयोः प्रक्षालनं विधीयते । कथं पुनस्तत्कर्तव्यमिति । तत्र आह— दक्षिणमग्रे ब्राह्मणाय प्रयच्छेत् । यदा ब्राह्मणः प्रक्षालयिता तदा दक्षिणमग्रे ब्राह्मणाय प्रयच्छेत् ॥

अत्र वचनात् अग्रे प्रयच्छेदित्युक्ते सन्निम्यते । यथा पश्चात् सव्यमिति पादयोः क्रम इत्येतत् सिद्ध इत्यस्य. This ought to come under sūtra 10 below.

[1] L. has निवेदनं न स्यात्.

पश्चात्सव्यम् । कुतः अग्रेवचनात् ॥ (९)

सव्यं शूद्राय ॥ १० ॥

यदा शूद्रस्तदा सव्यमग्रे प्रयच्छति । तत्र संशयः । किं प्रक्षालयिता नियम्यते[1] । आहोस्वित्क्रमनियम इति । किंचातः । यदि तावत् प्रक्षालयितुर्नियमः क्षत्रियवैश्ययोरप्रसङ्गः । अथ पुनः पादयोः क्रमो नियम्यते ब्राह्मणशूद्रयोः[2] प्रवृत्तिः । तेन क्षत्रियवैश्ययोः प्रवृत्तिरनियमश्च । किं पुनरत्र नियमः स्यात् । उच्यते । क्रमो नियम्यते । अत्र वचनात् । अग्रे प्रयच्छेदित्युक्ते स नियम्यते । यदा पश्चात्सव्य इति पादयोः क्रम इत्येतत् सिद्धं भवति ॥

अग्रे प्रयच्छेत् । पश्चाद्दक्षिणम् । क्षत्रियवैश्यौ यदा प्रक्षालयितारौ तदा सव्यं वा पूर्वं दक्षिणं वा । नास्ति नियमः ॥ (१०)

प्रक्षालितपादोऽर्घ्यमञ्जलिना प्रतिगृह्य ॥ ११ ॥

पादौ प्रक्षाल्य अर्घ्यमञ्जलिना प्रतिगृह्णाति ॥

प्रक्षालितपादग्रहणमानन्तर्यार्थम् । प्रक्षालनानन्तरमर्घ्यमेव गृह्णीयादि। गन्धमाल्यादिसंयुक्तमुदकमर्घ्यमित्युच्यते ॥ (११)

अथाचमनीयेनान्वाचामति—अमृतोपस्तरणमसि—इति ॥ १२ ॥

[1] A. L. have किं प्रयोजनं यतश्चतुरोतीति नियम्यते ।

[2] After शूद्र A omits a long passage which was already found extra under Sūtra 7. The omission extends up to सिद्धं.

अथाचमनीयेनाचामति—अमृतोपस्तरणमसि—इत्यनेन मन्त्रेण। तत्र प्रक्षालितपादग्रहणं न कर्तव्यम्। कल्पितक्रमादेव सिद्धम्। तत्क्रियतेऽनन्तरार्थम्। कथं प्रक्षालनादनन्तरमर्घ्यप्रतिग्रहमेव कुर्यात् नान्यत्। किंपुनरन्यत् प्राप्नोति। अन्यान्यप्यर्हणीयानि यानि द्रव्याणि गन्धमाल्यादीनि प्राप्नुवन्ति तन्निवृत्त्यर्थमारभ्यते। अथशब्दश्च तदर्थ एव। कथमर्घ्यप्रतिग्रहादनन्तरमाचमनीयं स्यात्। तस्मादुभयत्रापि गन्धमाल्यादीनां प्रतिषेधः। तानि उपरते कर्मणि दातव्यानि। आचमनीयेनाचामतीति। आचमनादनन्तरमेवेदमिति। तत्रान्यच्छौचार्थमाचमनं नेच्छन्ति। कस्मात्। निदर्शनात्। सोमे च प्राणाहुतिषु च मधुपर्के च नोच्छिष्टा भवन्तीति। इह च दर्शनाद्यत्र यत्राचमनमभिप्रेतं तत्र तत्र विदधाति—आचान्तोदकायेति। तदेतन्नोपपद्यते। कस्मात्। सोमे नोच्छिष्टविधानात्। मन्यामहे यत्राचमनं न प्रतिषेधति तत्र शौचार्थमाचमनं प्रसज्येत इति। ननु चैवं सत्याचान्तोदकस्य वचनं अपार्थकम्। नेत्युच्यते। अन्यार्थं च तत्॥

अथशब्दस्त्वानन्तर्यार्थः। अर्घ्यानन्तरमाचमनीयमेवेति। तेन गन्धमाल्यादीनि परिसमाप्ते कर्मणि दातव्यानि। आचामतीत्युदकं पिबतीत्यर्थः। अत्र शौचार्थमाचमनं न भवति। कुतः। स्मृतेः मधुपर्के च सोमे च अप्सुप्राणाहुतीषु च नोच्छिष्टा भवन्ति इति। उत्तरत्र विधानाच्च आचान्तोदकाय गाम् इति। एवमेके। तदयुक्तम्। कुतः। सोमे अनुच्छिष्टविधानाद्यत्राचमनं न प्रतिषेधति तत्र शौचार्थमाचमनं भवतीति गम्यते। आचान्तोदकवचनमन्यार्थम्॥ (१२)

**मधुपर्कमाह्रियमाणमीक्षेत—मित्रस्य त्वा चक्षुषा प्रतीक्षे—इति॥ १३॥**

मधुपर्कमाह्रियमाणमीक्षेत मित्रस्य त्वा—इत्यनेन मन्त्रेण। आह्रियमाणमानीयमानमित्यर्थः। ईक्षेत पश्येत इत्यर्थः॥

मधुपर्कमाह्रियमाणमानीयमानमीक्षेत मन्त्रेण ॥ (१३)

**देवस्य त्वा सवितुः प्रसवेऽश्विनोर्बाहुभ्यां पूष्णो हस्ताभ्यां प्रतिगृह्णामि—इति तदञ्जलिना प्रतिगृह्य मधु वाता ऋतायतः—इति तृचेनावेक्ष्यानामिकया चाङ्गुष्ठेन च त्रिः प्रदक्षिणमालोड्य वसवस्त्वा गायत्रेण छन्दसा भक्षयन्तु—इति पुरस्तान्निमार्ष्टि ॥ १४ ॥**

देवस्य त्वा—इत्यनेन मन्त्रेणाञ्जलिना प्रतिगृह्णाति। मधुपर्कमाहृतमानीतं प्रतिगृह्य मधु वाताः—इत्यनेन तृचेन[1] अवेक्षति। अवलोकयतीत्यर्थः। अवलोक्यानामिकया चाङ्गुष्ठेन च त्रिः प्रदक्षिणमालोडयति। तत्रानामिकायां विवदन्ति। केचिदुपकनिष्ठिकां मन्यन्ते। केचिन्मध्यमाम्। ननु चोभयोरपि नामास्तीति। तत्राप्येके[2] मध्यमामनामिकां मन्यन्ते[3]। देशेनास्या व्यपदेशः। तेन सा अनामिकेति। अन्ये[4] पुनरुपकनिष्ठिकां व्यपदिशन्ति। इति। तस्मात्सा अनामिकेति। आगमस्य विशेषः। आलोड्य वसवस्त्वा—इत्यनेन मन्त्रेण पुरस्तान्निमार्ष्टि। लेपमपनयतीत्यर्थः॥

अनामिकेति केचिन्मध्यमामाहुः। कुतः। देशेनैव समाख्या। न तु तस्या नाम विद्यते अङ्गुष्ठादिवत्। अन्ये तूपकनिष्ठिकामाहुः। कुतः। कनिष्ठिकया ह्यसौ व्यपदिश्यते। न तु तस्या नामास्तीति। आगमाद्विशेषो ज्ञेयः। तृचेनावेक्ष्य ततः सव्ये पाणौ कृत्वा प्रदक्षिणमालोड्य वसवस्त्वेति पुरस्तान्निमार्ष्टि। अङ्गुलिगतं लेपमपनयतीत्यर्थः॥ (१४)

[1] A. तृचमन्त्रेण. L. तृचेन मन्त्रेण.

[2] A. तत्राप्ये . . . L. तत्रापि.

[3] A. has ते ब्रुवन्ते extra after this.

[4] A. L. ये.

**रुद्रास्त्वा त्रैष्टुभेन छन्दसा भक्षयन्तु—इति दक्षिणतः। आदित्यास्त्वा जागतेन छन्दसा भक्षयन्तु—इति पश्चात्। विश्वे त्वा देवा आनुष्टुभेन छन्दसा भक्षयन्तु—इत्युत्तरतः। भूतेभ्यस्त्वा—इति मध्यात् त्रिरुद्गृह्य ॥ १५ ॥**

एवमुत्तरैः प्रतिदिशं लेपमपनयति इति। भूतेभ्यस्त्वा इति मध्यात् त्रिरुद्गृह्णाति। ऊर्ध्वमुत्क्षिपतीत्यर्थः[1] ॥

मन्त्रेण मध्यात् त्रिरुद्गृह्य निमार्ष्टि। ऊर्ध्वं त्रिरुत्क्षिपतीत्यर्थः। मन्त्रावृत्तिरुक्ता ॥ (१५)

ततो भूमौ निधाय पात्रम्—

**विराजो दोहोऽसि—इति प्रथमं प्राश्नीयात्। विराजो दोहमशीय—इति द्वितीयम्। मयि दोहः पद्यायै विराजः—इति तृतीयम् ॥ १६ ॥**

विराजो दोहोऽसि—इति प्रथमं प्राश्नीयात्। प्रथमग्रहणमपार्थकम्। तस्मात् पूर्वमेव पक्षं[2] दृष्ट्वा अन्यथा वर्णयन्ति त्रिः[3] उद्गृह्य प्रथममुद्ग्राहं प्राश्नीयादिति। अथ द्वितीयमुद्ग्राहं विराजो दोहमशीय—इति प्राश्नीयात्। एवमेके। एतस्मिन्नपि पक्षे तृतीयग्रहणमपार्थकम्। तस्मात्पूर्व एव पक्षः। मन्त्राश्च प्राशनं चोक्तम् ॥

सङ्ख्यावचनानि तु सर्वप्राशनपक्षे त्रिभिरेव मन्त्रैर्यथा सर्वं प्राशितं भवति तथा प्राश्नीयादित्येवमर्थानि। एवं भाष्यकारः। अन्ये त्वन्यथा व्याचख्युः।

[1] A. L. ऊर्ध्वमुत्क्षिपतीत्यनेन मन्त्रेण.

[2] A. omits तस्मात् पूर्वमेव पक्षं.

[3] A. L. omit त्रिः.

भूतेभ्यस्त्वेति मध्यात्त्रिरुद्गृह्य विराजो दोहोऽसीति प्रथममुद्ग्राहं प्राश्नीयात्। विराजो दोहमशीयेति द्वितीयमुद्ग्राहम्। मयि दोह इति तृतीयमुद्ग्राहम्। तृतीयवचनं सर्वप्राशनपक्षे तृतीयेन प्राशनेन यथा सर्वं प्राशितं भवति तथा प्राश्नीयादित्येवमर्थम्। पद्यायै विराज इत्यत्र विराज इति षष्ठी। कुतः। पूर्वयोस्तथा दृष्टत्वात्। पद्यायै इत्यापि चतुर्थी षष्ठ्यर्थे। तेन तत्सामानाधिकरण्ये सत्यपि षष्ठ्येव युक्ता कल्पयितुम्॥ (१६)

**न सर्वम् ॥ १७ ॥**

न सर्वं मधुपर्कं प्राश्नीयात्॥

प्राश्नीयात् न सर्वम्॥ (१७)

**न तृप्तिङ्गच्छेत् ॥ १८ ॥**

न च तृप्तिं गच्छेत्॥

तृप्तिश्च न गच्छेत॥ (१८)

**ब्राह्मणायोदङुङ्च्छिष्टं प्रयच्छेत। अलाभेऽप्सु ॥ १९ ॥**

दद्यादित्यर्थः। ब्राह्मणालाभे अप्सु निषिञ्चेत्॥

ब्राह्मणाय उच्छिष्टं उद्धृतादवशिष्टं उदङ्मुखो मधुपर्कं प्रयच्छेत्। ब्राह्मणालाभे अप्सु निषिञ्चेत्॥ (१९)

**सर्वं वा ॥ २० ॥**

सर्वं वा प्राश्नीयात्॥

प्राश्नीयात्॥ (२०)

**अथाचमनीयेनान्वाचामति—अमृतापिधानमसि—इति ॥ २१ ॥**

अथाचमनीयेनान्वाचामति—अमृतापिधानमसि—इत्यनेन मन्त्रेण ॥

यत्तत्पूर्वमाचमनीयं निवेदितं तेनान्वाचामति मन्त्रेण ॥ (२१)

**सत्यं यशः श्रीर्मयि श्रीः श्रयताम्—इति द्वितीयम् ॥ २२ ॥**

सत्यं यशः—इत्यनेन द्वितीयमन्वाचामति ॥

द्वितीयग्रहणमाचमनीयप्राप्त्यर्थम् । इतरथा मन्त्रस्योत्तरेण सम्बन्धः स्यात् ॥

**आचान्तोदकाय गां वेदयन्ते ॥ २३ ॥**

तत्राचान्तोदकवचनमपार्थकम् । कस्मात् । आचमनस्य प्राप्तत्वात् । उच्यते । नेदं शौचार्थमाचमनं चोद्यते । किमर्थं तर्हि । कर्माङ्गमाचमनं चोद्यते । दर्शपूर्णमासवत् । अथोदकवचनमपार्थकम् । कस्मात् । आचमनं हि उदकेनैव भवति । उच्यते । उदकं क्रियते आचमनीयनिवृत्त्यर्थम् । गां वेदयन्ते ॥

आचान्तग्रहणं शौचार्थमाचमनं कृत्वा कर्माङ्गमप्याचमनं कुर्यादित्येवमर्थम् । उदकवचनमाचमनीयनिवृत्त्यर्थम् । तेनाचमने उदकान्तरं भवति ॥ (२३)

**हतो मे पाप्मा पाप्मा मे हत—इति जपित्वोङ्कुरुत—इति कारयिष्यन् ॥ २४ ॥**

हतो मे पाप्मा पाप्मा मे हत इति जपित्वा ओं कुरुतेति कारयिष्यन् मारयिष्यन्[1] चेद्भवति। मारयिष्यन् यदि[2] भवतीत्यर्थः ॥

इमं मन्त्रं जपित्वा ओं कुरुतेति ब्रूयात् यदि कारयिष्यन्मारयिष्यन् भवति। तदा च दाता आलभेत। तत्र देवताः प्रागुक्ताः ॥ (२४)

**माता रुद्राणां दुहिता वसूनाम्—इति जपित्वा ओं उत्सृजत—इत्युत्स्रक्ष्यन् ॥ २५ ॥**

माता रुद्राणाम्—इति जपित्वा ओं उत्सृजत इति उत्स्रक्ष्यन् यदि भवति। इहागत्य स्मृतम्। मयि दोहः पद्यायै विराजः इति चतुर्थी षष्ठी वा इति। कुतः संशयः। तुल्यत्वात्। तत्र चतुर्थीमित्येके। कस्मात्। पूर्ववदेव[3] चतुर्थीदर्शनात् पद्यायै इति। अन्ये पुनः षष्ठीं मन्यन्ते। कस्मात्। अपूर्वात्। परयोश्च दर्शनात्। कः पुनरत्र निर्णयः। षष्ठीति। येऽपि चतुर्थीमुपदिशन्ति ते षष्ठीमेव विपरिणमन्ति। तेनोभयथापि शक्यते कल्पयितुम् ॥

यद्युत्स्रक्ष्यन् भवति तदा एतां जपित्वा ओं उत्सृजतेति ब्रूयात् ॥ (२५)

**नामांसो मधुपर्को भवति भवति ॥ २६ ॥**

तत्रोच्यते। मधुपर्के किं मांसं देयमिति। नेत्युच्यते। इदं मधुपर्कभोजनं अमांसं न भवति इत्ययमर्थः। तस्मादनेनाभ्युपायेन भोजनमनुयोजितं भवति नामांसो मधुपर्को भवति इति ॥

[1] A. has यदि before कारयिष्यन्.

[2] L. omits यदि.

[3] L. पूर्वपदे.

मधुपर्काङ्गं भोजनं अमांसं न भवतीत्यर्थः । कुतः । मांसस्य भोजनाङ्गत्वेन लोके प्रसिद्धत्वात् । अनेनाभ्युपायेन भोजनमप्यत्र विहितं भवति । पशुकरणपक्षे तन्मांसेन भोजनम् । उत्सर्जनपक्षे मांसान्तरेण । अध्यायान्तलक्षणार्थं द्विवचनं मङ्गलार्थञ्च ॥ (२६)

इति प्रथमे चतुर्विंशतितमा कण्डिका

प्रथमोऽध्यायः समाप्तः

---

# PUBLICATIONS OF THE ADYAR LIBRARY

## (The Theosophical Society, Adyar, Madras, S. India)

| | | Rs. | A. |
|---|---|---|---|
| **1910** | | | |
| 1. A PRELIMINARY LIST OF THE SAṂSKṚT AND PRĀKṚT MSS. in the Adyar Library. (Saṃskṛt-Devanāgari) | Boards ... | 1 | 8 |
| | Cloth ... | 2 | 0 |
| **1912** | | | |
| 2. A DESCRIPTIVE CATALOGUE OF THE SAṂSKṚT MSS. in the Adyar Library. *By* F. O. Schrader, Ph.D., Vol. I, Upaniṣads | Cloth ... | 5 | 0 |
| 3. THE MINOR UPANIṢADS (Saṃskṛt) critically edited for the Adyar Library. *By* F. O. Schrader, Ph.D., Vol. I.—Saṃnyāsa | Cloth ... | 10 | 0 |
| **1916** | | | |
| 4. AHIRBUDHNYA-SAṂHITĀ OF THE PĀÑCARĀTRA ĀGAMA (Saṃskṛt), Edited under the supervision of F. O. Schrader, Ph.D., 2 Vols. | Cloth ... | 10 | 0 |
| 5. INTRODUCTION (English) TO THE PĀÑCARĀTRA AND THE AHIRBUDHNYA SAṂHITĀ. *By* F. O. Schrader, Ph.D. | Cloth ... | 3 | 0 |
| **1920** | | | |
| 6. YOGA UPANIṢADS—20—with the Commentary of S'rī Upaniṣad Brahma Yogin. Edited *by* Paṇḍit A. Mahadeva Sastri, B.A. | ... | 5 | 0 |
| **1921** | | | |
| 7. SĀMĀNYA VEDĀNTA UPANIṢADS—24—with the Commentary of S'rī Upaniṣad Brahma Yogin. Edited *by* Paṇḍit A. Mahadeva Sastri, B.A. | ... | 5 | 0 |
| **1923** | | | |
| 8. VAIṢṆAVA UPANIṢADS—14—with the Commentary of S'rī Upaniṣad Brahma Yogin. Edited *by* Paṇḍit A. Mahadeva Sastri, B.A. | ... | 4 | 0 |
| **1925** | | | |
| 9. S'AIVA UPANIṢADS—15—with the Commentary of S'rī Upaniṣad Brahma Yogin. Edited *by* A. Mahadeva Sastri, B A. | ... | 3 | 0 |
| 10. S'ĀKTA UPANIṢADS—8—with the Commentary of S'rī Upaniṣad Brahma Yogin. Edited *by* Paṇḍit A. Mahadeva Sastri, B.A. | ... | 2 | 8 |
| **1926** | | | |
| 11. CATALOGUE OF SAṂSKṚT MSS. in the Adyar Library (revised). Edited *by* the Paṇḍits of the Adyar Library under the direction of Prof. C. Kunhan Raja, M.A., D. Phil.(Oxon.), 2 Vols. | Each ... | 3 | 12 |

| | Rs. | A. |
|---|---|---|
| **1929** | | |
| 12. SAMNYĀSA UPANIṢADS—17—with the Commentary of S'rī Upaniṣad Brahma Yogin. Edited *by* T. R. Chintamani, M.A., and the Paṇḍits of the Adyar Library, under the direction of Prof. C. Kunhan Raja, M.A. D. Phil. (Oxon.) ... | 4 | 0 |
| 13. RUKMIṆĪ KALYĀṆA MAHĀ KĀVYA by Rājacūdāmaṇi Dikṣita. Edited *by* the Paṇḍits of the Adyar Library and Mr. T. R. Chintamani, M.A., under the direction of Prof. C. Kunhan Raja, M.A., D. Phil. (Oxon.) ... | 2 | 0 |
| **1933** | | |
| 14. UNPUBLISHED MINOR UPANIṢADS with the Commentary of S'rī Upaniṣad Brahma Yogin. Edited *by* the Paṇḍits of the Adyar Library, under the direction of Prof. C. Kunhan Raja, M.A., D. Phil. (Oxon.) ... | 5 | 0 |
| **1936** | | |
| 15. TEN MAJOR UPANIṢADS with the Commentary of S'rī Upaniṣad Brahma Yogin. Edited *by* the Paṇḍits of the Adyar Library under the direction of Prof. C. Kunhan Raja, M.A., D Phil. (Oxon.) | | |
| Is'a to Aitareya, Vol. I ... | 4 | 8 |
| Chāndogya and Bṛhadāraṇyaka, Vol. II ... | 6 | 0 |
| Vol. I Boards, Vol. II ,, ... | 9 | 8 |
| **1937** | | |
| 16. MELARĀGAMĀLIKĀ of Mahāvaidyanātha S'ivan. Edited *by* Paṇḍit S. Subrahmanya Sastri, F.T.S. ... | 2 | 0 |
| **1938** | | |
| 17. SAMGRAHACŪḌĀMAṆI—Edited *by* Paṇḍit S. Subrahmanya Sastri, F.T.S. with a critical Introduction in English *by* T. R. Srinivasa Aiyangar, B.A., L.T. ... | 5 | 0 |
| 18. PRATYABHIJÑĀHṚDAYAM (The Secret of Recognition) with English Translation and Notes *by* K. F. Leidecker, M.A., Ph.D.; Text edited *by* the Staff of the Adyar Library under the direction of Dr. G. Srinivasa Murti, B.A., B.L., M.B. & C.M., Vaidyaratna, Hon. Director, Adyar Library. ... | 3 | 0 |
| 19. BHAVASAṄKRĀNTI-SŪTRA AND NĀGĀRJUNA'S BHAVASAMKRĀNTI S'ĀSTRA—with the Commentary of Maitreyinātha—with English Translation *by* Paṇḍit N. Aiyaswami Sastri, Tirupati. ... | 2 | 4 |
| 20. YOGA UPANIṢADS. Translated into English *by* T. R. Srinivasa Aiyangar, B.A., L.T., and Paṇḍit S. Subrahmanya Sastri, F.T.S. ... | 5 | 0 |

| | | Rs. | A. |
|---|---|---|---|
| 21. | * WHERE THEOSOPHY AND SCIENCE MEET (in four Parts) by a body of experts—Edited *by* Professor D. D. Kanga, M.A., I.E.S. (Retd.) | | |
| | Part 1. Nature—From Macrocosm to Microcosm ... | 2 | 8 |
| | Part 2. Man—From Atom to Man ... | 2 | 8 |
| | Part 3. God—From Humanity to Divinity ... | 2 | 8 |
| | Part 4. Some Practical Applications ... | 2 | 8 |

## 1939

| | | | |
|---|---|---|---|
| 22. | ṚGVEDAVYĀKHYĀ, MĀDHAVAKṚTĀ—Edited *by* Prof. C. Kunhan Raja, M.A., D. Phil. (Oxon ) Vol. I. ... | 6 | 0 |

## 1940

| | | | |
|---|---|---|---|
| 23. | THE NUMBER OF RASAS *By* V. Raghavan, M.A., Ph. D., Department of Saṃskṛt, University of Madras, with a Foreword by Prof. M. Hiriyanna, M.A., formerly Professor of Saṃskṛt Maharajah's College, Mysore ... | 3 | 0 |

## 1941

| | | | |
|---|---|---|---|
| 24. | SĀMĀNYA VEDĀNTA UPANIṢADS—Translated into English *by* T. R. Srinivasa Aiyangar, B.A., L.T., and Paṇḍit S. Subrahmanya Sastri, F.T.S. ... | 5 | 0 |
| 25. | BHAGAVADGĪTĀRTHAPRAKĀŚIKĀ of Upaniṣad Brahmayogin (Saṃskṛt). Edited *by* the Paṇḍits of the Adyar Library with an Introduction by Prof. C. Kunhan Raja, M.A., D.Phil. (Oxon.) .. | 4 | 0 |
| 26. | SĀMAVEDA-SAṂHITĀ—With the Commentaries of Mādhava and Bharatasvāmin. Edited *by* Prof. C. Kunhan Raja, M.A., D. Phil. (Oxon.) ... | 6 | 0 |
| 27. | RĀJA DHARMA (Dewan Bahadur K. Krishnaswami Rao Lectures, 1938, University of Madras) *by* Rao Bahadur K. V. Rangaswami Aiyangar, M.A. ... | 3 | 8 |
| 28. | VARIVASYĀRAHASYAM of Bhāsurānandanātha (2nd Edition) by Paṇḍit S. Subrahmanya Sastri, F.T.S. (with English Translation) ... | 2 | 8 |
| 29. | VYAVAHĀRANIRṆAYA OF VARADARĀJA—Edited *by* Rao Bahadur K. V. Rangaswami Aiyangar, M.A., and A N. Krishna Aiyangar, M.A., L.T., Adyar Library with a FOREWORD *by* Sir P. S. Sivaswamy Aiyer, K.C.S.I., C.I.E., LL D. ... | 15 | 0 |
| 30 | SAṂGĪTARATNĀKARA—With the Commentaries of Catura Kallinātha and Siṃhabhūpāla. Edited *by* Paṇḍit S. Subrahmanya Sastri, F.T.S. Vol. I. (Adhyāya 1) ... | 9 | 0 |

* *Published under the auspices of the Adyar Library Association.*

Rs. A.

## 1942

| | | Rs. | A. |
|---|---|---|---|
| 31. | CATALOGUE OF THE ADYAR LIBRARY, Western Section part 1—prepared under the direction of Bhikshu Arya Asanga, Jt. Director and Curator, Western Section, Adyar Library ... | 5 | 0 |
| 32. | ĀLAMBANAPARĪKṢĀ AND VṚTTI *by* Diṅnāga with English translation, Tibetan text etc. by Paṇḍit N. Aiyaswami Sastri, Tirupati | 3 | 8 |
| 33 | SOME CONCEPTS OF ALAṄKĀRA S'ĀSTRA *by* V. Raghavan, M.A., Ph. D., University of Madras ... | 4 | 0 |
| 34. | VEDĀNTAPARIBHĀṢĀ—with English translation and Notes *by* Prof. S. S. Suryanarayana Sastri, M.A., B.Sc. (Oxon.), Bar-at-Law, Reader, Head of the Department of Philosophy, University of Madras. ... | 2 | 12 |
| 35. | A DESCRIPTIVE CATALOGUE of the Sanskrit Manuscripts in the Adyar Library *by* K. Madhava Krishna Sarma, M.O.L., under the direction of Prof. C. Kunhan Raja, M.A , D. Phil. (Oxon.) Vol. I—Vedic ... | 15 | 0 |
| 36. | S'RĪ PĀÑCARĀTRA RAKṢĀ of S'rī Vedānta Des'ika—Edited *by* Vaidyaratna Paṇḍit M. Duraiswami Aiyangar and Vedānta S'iromaṇi T. Venugopalacharya ; with an Introduction in English by G. Srinivasa Murti, Hon. Director, Adyar Library. ... | 4 | 8 |
| 37. | CATALOGUE OF THE ADYAR LIBRARY, Western Section, part 2, prepared under the direction of Bhikshu Arya Asanga, Jt. Director and Curator, Western Section. ... | 6 | 0 |
| 38. | CATURDAS'ALAKṢAṆĪ OF GADĀDHARA with three commentaries—Edited *by* Paṇḍit N. Santanam Aiyar. Vol. I. ... | 4 | 8 |

## 1943

| | | Rs. | A. |
|---|---|---|---|
| 39. | PHILOSOPHY OF VIS'IṢṬĀDVAITA *by* Prof. P. N. Srinivasachari, M.A., Retired Principal, Pachaiyappa's College, Madras. ... | 10 | 0 |
| 40 | VĀDĀVALĪ OF JAYATĪRTHA with English translation and Notes by P. Nagaraja Rao, M.A. Sir Sayaji Rao Fellow, Benares Hindu University ... | 4 | 0 |
| 41 | Spinozian Wisdom or Natural Religion *by* James Arther ... | 2 | 12 |
| 42 | USĀṆIRUDDHA of Rāma Pāṇivāda. Edited *by* Paṇḍit S. Subrahmanya Sastri, F.T.S and Prof. C Kunhan Raja, M A., D.Phil. (Oxon.) ... | 3 | 8 |

## 1944

| | | Rs. | A. |
|---|---|---|---|
| 43. | SAṂGĪTARATNĀKARA—With the Commentaries of Catura Kallinātha and Siṃhabhūpāla Edited *by* Paṇḍit S Subrahmanya Sastri, F. T. S. Vol. II. (Adhyāyas 2—4) ... | 9 | 0 |
| 44. | ĀS'VALĀYANAGṚHYA-SŪTRA—With the Commentaries of Devasvāmin and Nārāyaṇa. Edited by Svami Ravi Tirtha. Vol. I (Adhyāya 1). ... | 6 | 4 |

Rs. A.

## PAMPHLETS

### 1939

A VARIANT VERSION OF THE EKĀGNIKĀṆḌA. (Reprinted from the Adyar Library Bulletin, October, 1939). Edited *by* K. Madhava Krishna Sarma, M.O.L. ... 0 3

### 1940

THE RĀJAMṚGĀṄKA OF BHOJA. (Reprinted from the Adyar Library Bulletin, October, 1940). Edited *by* K. Madhava Krishna Sarma, M.O.L. ... 0 4

### 1942

THE ṢAT PAÑCĀS'IKĀ, a Silpas'āstra manual. (Reprinted from the Adyar Library Bulletin, February 1942). Edited *by* K. Madhava Krishna Sarma, M.O.L. ... 0 5

THE PRAMĀṆAMAÑJARĪ OF SARVADEVA. (Reprinted from the Adyar Library Bulletin, May, 1942). Edited *by* K. Madhava Krishna Sarma, M.O.L. ... 0 6

A List of Manuscripts (Reprinted from the Adyar Library Bulletin Oct., 1942) ... 1 0

THE PATH OF GREATNESS. (Reprinted from the Adyar Library Bulletin, December, 1942), *by* Dr. G. S. Arundale, M.A., D.Lit. 0 6

### 1943

VIS'EṢĀMṚTA of Tryambaka Mis'ra. Edited *by* H. G. Narahari, M.A. (Reprinted from the Adyar Library Bulletin, May, 1943). ... 0 12

A SANSKRIT LETTER OF MOHAMAD DARA SHUKOH with English Translation and Notes *by* Dr. C. Kunhan Raja, M.A., D.Phil. (Oxon.) Reprinted from the Adyar Library Bulletin, Oct. 1940, May and October, 1943. ... 0 12

## IN THE PRESS

1. AS'VALĀYANA GṚHYA SŪTRA with the Commentaries of Devasvāmin and Nārāyaṇa. Vol. II. Edited *by* Swami Ravi Tirtha.
2. ĀS'VALĀYANA GṚHYA-SŪTRA (Bhāṣya of Devasvāmi). Translated into English *by* A. N. Krishna Aiyangar, M.A., L.T., Adyar Library.
3. JĪVĀNANDANAM OF ĀNANDARĀYAMAKHI with a Commentary by Vaidyaratna Paṇḍit M. Duraiswami Aiyangar. Edited *by* Vaidyaratna G. Srinivasa Murti, B.A., B.L., M. B. & C. M. and Vaidyaratna Paṇḍit M. Duraiswami Aiyangar.
4. VAIṢṆAVA UPANIṢADS—Translated into English *by* T R. Srinivasa Aiyangar, B.A., L.T. and Dr. G. Srinivasa Murti, Hon. Director, Adyar Library.
5. NYĀYAKUSUMĀÑJALI of Udayanācārya—Translated into English *by* Swami Ravi Tirtha.

6. THE ĀPASTAMBASMṚTI—Edited *by* A. N. Krishna Aiyangar, M.A., L.T., Adyar Library.

7. THE ACYUTARĀYĀBHYUDAYAM of Rājanātha Ḍiṇḍima—Sargas 7 to 12—*by* A. N. Krishna Aiyangar, M.A., L.T., Adyar Library.

8. GAUTAMASMṚTI—Edited *bv* A. N. Krishna Aiyangar, M.A., L.T., Adyar Library

9. KĀLĀDARS'A OF ĀDITYA BHAṬṬA—Edited *by* Rao Bahadur K. V. Rangaswami Aiyangar, M.A., and A. N. Krishna Aiyangar, M.A., L.T., Adyar Library.

10. PAKṢATĀ OF GADĀDHARA—with four commentaries *by* Paṇḍit N. Santanam Aiyar.

11. HORĀS'ĀSTRA—with the commentary Apūrvārthapradars'ikā *by* A. N. Srinivasaraghava Aiyangar, M.A., L.T.

12. VISṆUSMṚTI—With the Kes'ava Vaijayanti of Nanda Paṇḍita. Edited *by* Rao Bahadur K. V. Rangaswami Aiyangar, M A., and A. N. Krishna Aiyangar, M.A., L.T., Adyar Library.

13. CATURDAS'ALAKṢANĪ OF GADĀDHARA with three commentaries. Vol. II and III. *by* Paṇḍit N. Santanam Aiyar.

14. SAṂGĪTARATNĀKARA—With the Commentaries of Catura Kallinātha and Siṃhabhūpāla. Edited *by* Paṇḍit S. Subrahmanya Sastri, F.T.S. Vol III. (Adhyāyas 5 and 6). Vol. IV Adhyāya. 7.

15. UNMATTARĀGHAVA OF VIRŪPĀKṢA—Edited *by* Paṇḍit V. Krishnamacharya, and A. N. Krishna Aiyangar M.A., L.T. Adyar Library.

16. S'ALISTAMBHASŪTRA—Restored from Tibetan and Chinese Sources—*by* Paṇḍit N. Aiyaswami Sastri.

17. SPOṬHAVĀDA. Edited *by* Paṇḍit V. Krishnamacharya with his own tippaṇi.

18. ṚGVEDAVYĀKHYĀ of Mādhava, Vol. II. Edited *by* Dr. C. Kunhan Raja, M.A., D. Phil. (Oxon.).

19. RĀGAVIBODHA of Somanātha. Edited *by* Paṇḍit S. Subrahmanya Sastri, F.T.S.

20. ĀTMAN in Pre-Upaniṣadic Vedic Literature *by* H. G. Narahari, M.A., M. Litt., Adyar Library.

21. ALPAHABETICAL INDEX OF MANUSCRIPTS in the Adyar Library *by* Paṇḍit V. Krishnamacharya under the direction of Dr. C. Kunhan Raja, M.A., D. Phil. (Oxon.).

22. PRĀKṚTAPRAKĀS'A OF VARARUCI with the Commentary of Rāma Pāṇivāda

---

## WORKS UNDER PREPARATION

1. AVAYAVA OF GADĀDHARA—with commentaries *by* Paṇḍit N. Santanam Aiyar.
2. VṚTTARATNĀVALĪ—with commentary, English Translation and Notes *by* H. G. Narahari, M.A., M.Litt., Adyar Library.
3. SIDDHĀNTALAKṢAṆAM OF GADĀDHARA with commentaries. Edited *by* Paṇḍit N. Santanam Aiyar.
4. SĀMĀNYANIRUKTI OF GADĀDHARA with commentaries. Edited *by* Paṇḍit N. Santanam Aiyar.
5. VYUTPATTIVĀDA OF GADĀDHARA with commentaries. Edited *by* Paṇḍit N. Santanam Aiyar.
6. NYĀYAKUSUMĀÑJALI OF UDAYANA with the Commentary of Varadarāja.
7. SAṄGĪTARATNĀKARA—English Translation.

*JUST RELEASED*

## SANGITARATNAKARA

With the Commentaries of Catura Kallinatha (Kalanidhi) and Simhabhupala (Sudhakara)

Edited by Pandit S. Subrahmanya Sastri, F.T.S.

Vol. II: Adhyayas 2 to 4

Price Rs 9/-

---

## ASVALAYANA GRHYA SUTRA

With the Commentaries of Devasvamin and Narayana

Edited by Swami Ravi Tirtha

Vol. I: Adhyaya 1

Price Rs. 6-4-0

---

*Agents for our publications:*

THE THEOSOPHICAL PUBLISHING HOUSE

Adyar, Madras, S. India